**अग्निपुराणविषयानुक्रमणी**—डा० रामशंकर भट्टाचार्य कृत—यह अनुक्रमणी मुख्यत: पुराणगतविषयों की ही है, यद्यपि विशिष्ट नामों ( व्यक्ति-पर्वत-तीर्थ आदि ) का संकलन भी किया गया है ( अवान्तर विषयों का संस्कृत भी आवश्यकतानुसार किया गया है ) इस प्रकार यह अनुक्रमणी सर्वविध अनुसन्धान कार्यों के लिए उपयोगिनी सिद्ध होगी, यह निश्चित है। यह अनुक्रमणी संस्कृत में रचित हुई है ( वर्णक्रमानुसार )। अनुक्रमणी के साथ एक विशद भूमिका ( संस्कृत में ) दी गई है, जिससे इस पुराण से सम्बन्धित सभी ज्ञातव्य विषयों पर विस्तृत विवेचन किया गया है। पुराणोक्त विषयों की तुलना एवं परिचय आदि भी भूमिका में विवृत हुए हैं। मूल्य ८–००

# ग्रन्थसमर्पणम्

धीर्यस्य भासयति वेदपुराणकाव्य-
शब्देतिवृत्तविषयान् प्रमितिप्रधाना ।
ग्रन्थार्थसंग्रथन-चिन्तनकर्मदक्षः
श्रीवासुदेवशरणः सततश्रमी यः ॥
पौराणशास्त्रनिवहे निगमार्थपूर्णे
जातं मनो मम दृढं यदनुग्रहेण ।
तस्मै पुराणविषयं रचनं मदीयं
श्रद्धायुतेन मनसा हि समर्पयामि

रामशंकर भट्टाचार्यः



योगिवराणां दार्शनिक–मूर्धन्यानां
म० म० गोपीनाथकविराजमहाभागानाम्

## आशीर्वादः

The new edition of the Patanjala Yogasutra with the commentary of Vyasa and the Tattvavaisaradi of Vacaspati Misra, under the editorial supervision of Pt. Ram Shankar Bhattacharya has been received by me. It has impressed me as an exquisite and brilliant attempt in view of the fact that it has aimed at ensuing the accuracy of the text and specially on account of the learned introduction prefixed to it consisting of 93 pages. The Introduction deals with numerous topics relevant to the subject, a knowledge of which is deemed essential for a proper understanding, not only of the present text but also of the Yoga–Sastra as a whole. Though it may not be possible for every one to be in perfect accord with every thing that the writer has said, there is no doubt that the Introduction bears in it an unmistakable evidence of wide reading, sound scholarship, critical discernment and sometimes rare insight. I am confident that it will remove to a great extent a longfelt want in connection with the study of Yoga.

Varanasi,
26. 5. 1963.

GOPINATH KAVIRAJ

## मुद्रणाशुद्धि-संशोधनम् ( भूमिकायाम् )

| पृष्ठम् | पङ्क्तिः | अशुद्धः पाठः | शुद्धः पाठः |
|---|---|---|---|
| ५ | ५ | तथा | शास्त्रं ( आकरस्थलं तु १२।१०५ इति ) |
| ६ | ७ | मार्जिता | मृष्टा |
| ७ | ७ | काय | कार्य |
| ८ | ४ | न | नु |
| ९ | ७ | नम् | ना |
| ९ | २६ | ष्यते | प्यते |
| १६ | १० | भुंक्तानि | भूतानि |
| १६ | १३ | त्यागान्तरं | त्यागानन्तरं |
| २४ | ४ | यतो | यतः |
| ३० | १ | दिष्टमादौ | दिष्टाऽदौ |
| ३१ | १३ | कल | काल |
| ३१ | २८ | यति | यन्ति |
| ३२ | १ | त्रास्यपि | त्रस्यापि |
| ३९ | १६ | योगा | योग |
| ४२ | १६ | अतो | अतः |
| ४६ | १२ | भावावा | भावा |
| ४७ | २८ | क्वचिद्य | क्वचिच्च |
| ५६ | ४ | सदृशेव | सदृश्येव |
| ५७ | २५ | वादमेव लक्षितम् | वाद एव लक्षित इति भिक्षुः |
| ५७ | ३१ | sohhy | sophy |
| ६२ | १३ | पेकम् | पेयम् |
| ६३ | १५ | नामासु | नामसु |
| ६४ | १६ | तथाप | तथापि |
| ६४ | २० | विर्हिता | र्विहिता |
| ७२ | २७ | प्रतिप्रतिपादितम् | प्रतिपादितम् |
| ९१ | ६ | ब्यानो | व्यानो |

क्वचित् 'तत्त्व'-स्थले 'तत्व'-पाठो मुद्रितः ।

# भूमिका

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत्[1] ॥

[ १ ]

अथेहाग्निपुराणमधिकृत्य किमपि वयं विचारयामः ( आग्नेयपदमपि पुराणादिषु क्वचित् प्रयुज्यते )। वह्निपुराणेतिशब्द इदमेव पुराणं लक्षयति न वेत्युपरिष्टाद् प्रवेदयिष्यामः ।

पुराणेषु पुराणगणनाप्रस्तावे सर्वत्राग्निपुराणस्य नाम स्मृतमिति दृश्यते[2] । क्वचिच्चाग्निपुराणस्वरूपमधिकृत्यापि विवरणं प्रदत्तं पुराणे ।

---

१. श्लोकममुमधिकृत्य नीलकण्ठेन विस्तरशो विचारितं महाभारतटीकायां हरिवंशटीकायां च । आधुनिके काले विद्वद्वर्यः Sylvain Levi महोदयः इमं श्लोकमधिकृत्य यद् विचारितवान् तदपि पेशलम् ( द्र० Purana vol. II. pp. 112–119 ) ।

२. पद्म० ६।२१६।२४–२७ ;
पद्म० ६।२६३।७७–८१ ;
पद्म० ४।१११।९०–९४ ;
विष्णु० ३।६।२१–२४ ;
मत्स्य० ५३।१४–५६ ;
भाग० १२।१३।४–८ ;
भाग० १२।७।२३–२४ ;
लिङ्ग० १।३९।६१–६३ ;
वराह० ११२।७४–७७ ;
कूर्म० १।१।१३–१५ ;
गरुड० १।२१५।१५–१६ ;
शिव० ७।१।४३–४५ ;
प्रभास० २ अ० ;
कुमारिका० ४०।१६८–२०३ ;
रेवा० १ अ० ।

वायुपुराणस्य १०४तमेऽध्याये अष्टादशपुराणनामानि गणितानि, नात्र अग्निपुराणनाम पठ्यते[1]। अत्र पाठो भ्रष्ट इत्येवास्माभिर्मन्यते। मुद्रिते पाठे स्वीकृते सत्यष्टादशसंख्या न पूर्यते। १०४।७तमे श्लोके "तथैवायुतसंख्यातं षट्शताधिकमादिकम्" इत्युक्तम्। अत्र 'षट्शताधिकमग्निकम्' इति पाठो यदि स्यात् तर्हि अग्निपुराणनामात्र स्मृतमित्यभ्युपेयम्। कल्पनेयं सांशयिकीति विज्ञेयम्। अत्र वायौ इदमप्युक्तं यदिमानि पुराणानि 'बृहन्ति' इति। अतएव एतेषामष्टादशपुराणानां 'महापुराणेति' संज्ञा क्वचिद् दृश्यते। महापुराणरूपः पुराणभेदविशेषो भागवते (२।१०।१-७; १२।७।८-२२) तदनुगे ब्रह्मवैवर्तपुराणे (४।१२।६-११) च प्रतिपादितः, नान्येषु पुराणेषु इति विज्ञेयम्। अस्माभिस्तु महापुराणेति संज्ञाया अर्वाचीनत्वमेवाभ्युपगम्यते।

**पुराणेषु अग्निपुराणस्य क्रमानुसारिणी स्थितिः**—पुराणोक्तपुराणसूचीषु इदं अष्टमपुराणरूपेण गण्यते—"आग्नेयमष्टमं प्रोक्तम्" इति (पद्म० ६।२६३।७८)। वराहेऽपि इत्थमेव दृश्यते--"आग्नेयमष्टमं प्रोक्तम्" इति (११२।७५)। मत्स्यपुराणेऽपि अष्टमे स्थानेऽस्य पुराणस्य विवरणं प्रदत्तम् (५३।२८-२९)।

क्वचिच्च सप्तममस्य स्थानमिति—"आग्नेयं सप्तमं प्रोक्तं सहस्राणि तु षोडश" इति (रेवा० १।३६)। क्वचिच्च अस्य स्थानं नवममिति प्रोक्तम् (पद्म० ४।१११।९२)। इदं प्रतीयते यदस्य पुराणस्यैकं संस्करणं नवमस्थानार्हमपरं चाष्टमस्थानार्हमिति। कीदृशं संस्करणं किंविधं स्थानमर्हतीति प्रेक्षावद्भिर्विवेच्यम्[2]।

---

१. क्वचिच्च पुराणेऽग्निपुराणनामस्थले वायुपुराणनाम पठ्यत इत्याह श्रीराधाकृष्णन्महोदयः—"The principal Puranas are eighteen in number. Visnu, Bhagavata......Agni (or Vayu according to other accounts)...[ Indian Philosophy, Part III. p. 663 f. n. ]

२. अत्र प्रथमद्वितीयादिशब्दा न वास्तवं कर्मापि रचनाक्रममभिदधते, प्रत्युत विवक्षाक्रममित्यपि वक्तुं शक्यते। यतो हि पुराणक्रमे भूयिष्ठं साम्यमवलोक्यते, अतः क्रमोऽपि सारवानिति विज्ञायते। किमत्र बीजमिति चिन्तनीयं दोषज्ञैः।

**अग्निपुराणप्रकृतिः**—इदं तामसपुराणमिति पद्मपुराणे कथ्यते (६।२६३।८१-८२)। मत्स्य-कूर्म-शिव-लिङ्ग-स्कन्दपुराणान्यपि तामसानीति अत्रैवोक्तम्।

किमिदं तामसमिति ? उक्तं च मत्स्ये—"तद्वदग्नेश्च माहात्म्यं तामसेषु शिवस्य च" इति (५३।६९)। भगवान् शिवः खलु तमोगुणीति इतिहासपुराणेषु स्मर्यते, अग्निरपि शैवो वा रौद्रो वेति प्रसिद्धिरस्ति, अतः 'अग्नि-शिव-माहात्म्यख्यापनपरं पुराणं तामसम्' इति कथनं सुष्ठूपपन्नं भवति। आह हि– "अष्टादशपुराणेषु दशभिर्गीयते शिवः" इति। एषु दशसु अग्निपुराणं गण्यत एव।

एतेनेदमपि विज्ञातं भवति यदाग्नेये पुराणे भगवतोऽग्नेर्माहात्म्यं प्रमुखमासीत्, ततश्च कालक्रमतः तत् पुराणं प्रतिसंस्कारमापन्नं विद्यासारमयरूपेण परिणतमिति। कालक्रमानुसारेण पुराणविषयपरिवर्तनं कृतं लोकरुच्यनुसारेणेति पुराणेषूक्तं बहुधा[1], अतः पूर्वोक्तं मतं सयुक्तिकं भवति। प्रचलितस्याग्निपुराणस्य मूलं खलु एतदेवाग्निमाहात्म्यख्यापकं पुराणमित्यपि विज्ञायते।

**अग्निनामकारणम्**—अग्निनेदमुक्तमिति कृत्वाऽग्निनामाभूदिति विज्ञायते। आह च वसिष्ठः—"यथाग्निर्मां पुरा प्राह" (१।८), "अग्निनोक्तं पुराणं यदाग्नेयम्" (अग्नि० १।१०) इति। प्रवक्तृनामानुसारेण पुराणनामकरणं सुप्रथितमेव। आहात्र जीवगोस्वामी—"स्कान्दमाग्नेयमित्यादिसमाख्यास्तु प्रवचननिबन्धनाः, काठकादिवत्, आनुपूर्वीनिर्माणनिबन्धना वा" (तत्त्वसन्दर्भ पृ० २९)। नेदं मन्तव्यं यद् अग्निनामा देवविशेषः पुराणमिदमुक्तवानिति। अग्निपूजकसंप्रदाये अस्य पुराणस्य प्रवर्तनमभूत्, तत एवाग्निपुराणेति संज्ञा प्रचलितेति अनुमीयते।[2]

---

१. इतिहासपुराणानि भिद्यन्ते कालगौरवात्। (लिङ्ग० १।३६।६१)
कालेनाग्रहणं दृष्ट्वा पुराणस्य ततो नृप।
व्यासरूपमहं कृत्वा संहरामि युगे युगे॥ (मत्स्य० ५३।८-९)।
इतिहासपुराणानि भिद्यन्ते लोकगौरवात्॥ (कुमारिका० ४०।१६८)।

२. पुराणनामकरणे विविधा हेतवः। यथोक्तं नीलकण्ठेन—"अत्र क्वचिद् वक्तृसंबन्धः, क्वचिच्छ्रोतृसंबन्धः, क्वचित् प्रतिपाद्यमुख्यदेवताचरितसंबन्धः प्रवृत्तिनिमित्तमिति स्पष्टमेव दर्शितम्" (देवीभागवतटीकोपोद्घात पृ० २)।

वसिष्ठोऽस्य आदिमः श्रोतेति विचार्यो विषयः। अग्निना सह वसिष्ठस्य कश्चिदपि विशिष्टः संबन्धो नास्माभिर्ज्ञातः। प्रसिद्धं च वसिष्ठ-चरणम् ऋग्वेदे। प्रचलति च वसिष्ठधर्मसूत्रम्। 'अग्निपुराणोक्तविषयैः सहापि वसिष्ठस्य विशिष्टः संबन्ध आसीदिति न विज्ञायते। 'अग्निर्वै देवानां वसिष्ठ' इत्यादीनि वचांस्यत्रानुकूलानि।

अङ्गिरा एव अग्निपुराणकर्तेति भविष्यपुराणे—"आग्नेय-मङ्गिराश्चैव जनयामास चोत्तमम्, लिङ्गब्रह्माण्डके चापि तण्डिना रचिते शुभे" ( प्रतिसर्ग० २८।१४ ) वस्तुतः पुराणकर्तॄणां नामानि न सम्यग् ज्ञातुं शक्यन्त इत्यतः कर्तृनामविषये मतभेदोऽवश्यंभावीति।

**अग्निपुराणलक्षणम्**—एतद्विषये मत्स्यपुराण उक्तम्—

यत् तदीशानकं कल्पं वृत्तान्तमधिकृत्य च।
वसिष्ठायाग्निना प्रोक्तमाग्नेयं तत् प्रचक्षते ॥ ( ५३।२८ )।

ईशानकल्पगतमितिवृत्तमत्र प्रोक्तम्—अग्निना वसिष्ठायेति। ईशान-कल्पस्य नाम नात्रोक्तम्, यद्यपि वराहकल्पस्य नामात्र धृतमिति दृश्यते ( २।१७ )। अवितथमिदं यदिदं पुराणमग्नि वसिष्ठ संवादेन उपन्यस्तम् ( १।८-१३ ), अत इदमनुमीयते—यदेव ईशानकल्पवृत्तान्ता-नुवर्णनकारि प्राक्तनमग्निनामधेयं पुराणमासीत्, तदेव विपरिणमय्य ( नवीनैः विषयैः संयोज्य च ) विद्वद्भिर्नवीनेयं रचना कृता। प्राचीना विषया अपि विद्यन्तेऽत्रांशतः। सर्वविद्यासारसंग्रहोऽस्य पुराणस्य मुख्यं वैशिष्ट्यमिति सुप्रथितमेवेति हरप्रसादशास्त्री[१]।

**अग्निपुराणपरिमाणम्**—भिद्यन्ते खलु पुराणवचांसि अग्निपुराण-परिमाणविषयकाणि। अग्निपुराण एव उक्तम्—"द्वादशैव सहस्राणि सर्वविद्यावबोधनम्" इति ( २७२।११ )। दशपञ्चचतुःशतम् ( दशपञ्च सहस्राणि चत्वारि शतानि च—भावार्थदीपिका ) इति भागवतकार आह ( १२।१३।५ ), ब्रह्मवैवर्त्तकारश्च (४।१३१।१४)। अन्यत्र च षोडश

---

१. The first group of the three Puranas ( Garuda, Agni, Naradiya ) is most remarkable as containing the Sara of all the great works in science & art in Sanskrit literature ( J. B. O. R. S. Vol XIV, p. 330).

सहस्राणीति पदं प्रयुक्तम्—"षोडशैव सहस्राणि पुराणं चाग्निसंज्ञितम्" इति ( देवीभाग० १।३।६ )। मतमिदं मात्स्येऽपि दृश्यते ( ५३।२९ )।

कथं नु मतभेदः श्लोकपरिमाणविषय इति प्रश्नस्येदमेवोत्तरम्—यथाकालं विषयाणां संयोजनं वियोजनं च कृतमग्निपुराणप्रणेतृभिः, यच्च परिमाणं येन पुराणकारेण ज्ञातं, तेन तदेव परिमाणं पुराण-प्रस्तावेऽभिहितमिति। प्रायेण सर्वेषु पुराणेषु श्लोकपरिमाणविषयका मतभेदा दृश्यन्ते। पूर्वाचार्या अपि स्वदृष्ट्या श्लोकपरिमाणविषयकान् मतभेदान् विवेचितवन्तः[1] ।

**अग्निपुराणगता विषयाः**—अग्निपुराणे के च विषयाः प्रतिपादिता इति प्रश्नो जागर्ति। प्रचलितमग्निपुराणमस्योत्तरमित्थं प्रयच्छति—

"वसिष्ठ उवाच—
द्विविधं ब्रह्म वक्ष्यामि शृणु व्यासाखिलात्मगम्।
यथाग्निर्मां पुरा प्राह मुनिभिर्दैवतैः सह॥
पुराणं परमाग्नेयं ब्रह्मविद्याक्षरं परम्॥" ( १।८-९ )।

पुनरपि अत्रैव—

"अग्निरुवाच—
विष्णुः कालाग्निरुद्रोऽहं विद्यासारं वदामि ते।
ब्रह्माग्नेयं पुराणं यत् सर्वं सर्वस्य कारणम्॥
सर्गस्य प्रतिसर्गस्य वंशमन्वन्तरस्य च।
वंशानुचरितादेश्च मत्स्यकूर्मादिरूपधृक्" ॥ ( १।१३-१४ )।

इदं 'विद्यासारं पुराणम्' इति १।६तमश्लोकतः, १।७तमश्लोकतश्च विज्ञायते।

नारदीयपुराणे ( पूर्वार्धे ९९तमेऽध्याये ) प्रचलिताग्निपुराणगताः सर्वे विषया यथाक्रममुपदर्शिताः। अग्निपुराणस्य यत् प्रचलितं संस्करणं तत्र अर्वाचीनकाले किमपि प्रक्षेपादिकमभूद् न वे ति एतत्-सूचीतो विज्ञातं भवति सुधियाम्। इमे च श्लोकाः—

---

१. तथा हि—विष्णुपुराणश्लोकपरिमाणविषये मतद्वैधमस्ति। समाधत्ते टीकाकारः श्रीधरः—"विष्णुपुराणं च क्वचिद् दशसाहस्रं क्वचिद् अष्टसाहस्र-मित्यादिविकल्पेऽपि अत्र षट्साहस्रमेव व्याख्यायते" ( ३।६।२६ )।

अथातः संप्रवक्ष्यामि तवाग्नेयपुराणकम् ।
ईशानकल्पवृत्तान्तं वसिष्ठायानलोऽब्रवीत् ।। १ ।।

तत् पञ्चदशसाहस्रं नानाचरितमद्भुतम् ।
पठता शृण्वता चैव सर्वपापहरं नृणाम् ।। २ ।।

प्रश्नः पूर्वं पुराणस्य कथा सर्वावतारजा ।
सृष्टिप्रकरणं चाथ विष्णुपूजादिकं ततः ।। ३ ।।

अग्निकार्यं ततः पश्चात् मन्त्रमुद्रादिलक्षणम् ।
सर्वदीक्षाविधानं च अभिषेकनिरूपणम् ।। ४ ।।

लक्षणं मण्डलादीनां कुशायापार्जनं ततः ।
पवित्रारोपणविधिर्देवालयविधिस्ततः ।। ५ ।।

शालग्रामादिपूजा च मूर्तिलक्ष्म पृथक् पृथक् ।
न्यासादीनां विधानं च प्रतिष्ठापूर्तकं ततः ।। ६ ।।

विनायकादिपूजा च नानादीक्षाविधिः परम् ।
प्रतिष्ठा सर्वदेवानां ब्रह्माण्डस्य निरूपणम् ।। ७ ।।

गङ्गादितीर्थमाहात्म्यं द्वीपवर्षानुवर्णनम् ।
ऊर्ध्वाधोलोकरचना ज्योतिश्चक्रनिरूपणम् ।। ८ ।।

ज्योतिषं च ततः प्रोक्तं शास्त्रं युद्धजयार्णवम् ।
षट्कर्म च ततः प्रोक्तं मन्त्रमन्त्रौषधीगणः ।। ९ ।।

कुब्जिकादिसमर्चत्वं षोढा न्यासविधिस्तथा ।
कोटिहोमविधानं च मन्वन्तरनिरूपणम् ।।१०।।

ब्रह्मचर्यादिधर्माश्च श्राद्धकल्पविधिस्ततः ।
ग्रहयज्ञस्ततः प्रोक्तो वैदिकस्मार्तकर्म च ।।११।।

प्रायश्चित्तानुकथनं तिथीनां च व्रतादिकम् ।
वारव्रतानुकथनं नक्षत्रव्रतकीर्तनम् ।।१२।।

मासिकव्रतनिर्देशो दीपदानविधिस्तथा ।
नवव्यूहार्चनं प्रोक्तं नरकाणां निरूपणम् ।।१३।।

व्रतानां चापि दानानां निरूपणमिहोदितम् ।
नाडीचक्रसमुद्देशः सन्ध्याविधिरनुत्तमः ।।१४।।

गायत्र्यर्थस्य निर्देशो लिङ्गस्तोत्रं ततः परम् ।
राज्याभिषेकमन्त्रोक्तिर्धर्मकृत्यं च भूभुजाम् ।।१५।।

स्वप्नाध्यायस्ततः प्रोक्तः शकुनादिनिरूपणम् ।
मण्डलादिकनिर्देशो रत्नदीक्षाविधिस्ततः ॥१६॥

रामोक्तनीतिनिर्देशो रत्नानां लक्षणं ततः ।
धनुर्विद्या ततः प्रोक्ता व्यवहारप्रदर्शनम् ॥१७॥

देवासुरविमर्दाख्या ह्यायुर्वेदनिरूपणम् ।
गजादीनां चिकित्सा च तेषां शान्तिस्ततः परम् ॥१८॥

गोनरादिचिकित्सा च नानापूजास्ततः परम् ।
शान्तयश्चापि विविधाः छन्दःशास्त्रमतः परम् ॥१९॥

साहित्यं च ततः पश्चाद् एकार्णादिसमाह्वयाः ।
सिद्धशब्दानुशिष्टिस्य कोशः सर्गादिवर्गकः ॥२०॥

प्रलयानां लक्षणं च शारीरकनिरूपणम् ।
वर्णनं नरकाणां च योगशास्त्रमतः परम् ॥२१॥

ब्रह्मज्ञानं ततः पश्चात् पुराणश्रवणे फलम् ।
एतदाग्नेयकं विप्र पुराणं परिकीर्तितम् ॥२२॥

अस्मिन् सन्दर्भे कचिद् मुद्रणाशुद्धयो दृश्यन्ते । तथा हि—

पञ्चमे श्लोके 'कुशायापार्जनम्' इति पठ्यते, स च 'कुशापामार्जनम्' इति स्यात् । नवमे श्लोके 'मन्त्रमन्त्रौषधीगण' इति पठ्यते, स च 'यन्त्र-चक्रौधषीगणः' इति स्याद् न वेति सुधीभिर्विभाव्यम् । षोडशे श्लोके 'रत्नदीक्षाविधी' ति पठ्यते, स च 'रणदीक्षाविधी' ति स्यादेव । दृश्यतां 'वक्ष्ये सांग्रामिकं विधिमिति' श्लोकः (२३६।१), 'रणदीक्षा मयोक्ता ते' इति च ( २३६।६६ )। 'सिद्धशब्दानुशिष्टिस्य' इति कथनमसाधु ( २२ तमे श्लोके ), 'सिद्धशब्दानुशिष्टिश्च' इत्येव साधुः पाठः । विंशश्लोके 'स्वर्गादि वर्गक' इत्येव पाठः साधुः ।

**नारदीयपुराणाग्निपुराणसंवादः**—नारदीयोक्तविषयक्रमेण सह अग्निपुराणगतविषयक्रमस्य कीदृशं साम्यं वैषम्यं वास्तीति इह विचार्यते[1]—

| नारदीयकथनम् | अग्निपुराणस्थलनिर्देशः |
|---|---|
| प्रश्नपूर्वं पुराणस्य | अ० १ |
| कथा सर्वावतारजा | अ० २-१६ |

१. अध्याय-विषययोर्निर्देशः क्वचित् सांशयिक इति ज्ञेयम् ।

**नारदपुराणसूच्यां पुनरुक्तयः**—इदं दृश्यते यदिह सूच्यां केचन विषयाः पुनरुक्ताः—नरकवर्णनं नैकस्थलेषु वर्णितम्, व्रतनिरूपणमपि द्विः प्रोक्तम्। द्विधाकथनस्य न किमपि प्रयोजनमवलोक्यते। समान एव विषयः किमर्थं द्विधा विभज्य वर्णित इति प्रश्ने इदमेव उत्तरं संगतं प्रतीयते यदिदं पुराणमनेकधा संस्कृतम्, यतो विषया विप्रकीर्णा जाताः, ततश्च एक एव विषयः उभयत्र प्रतिपादित इति।

**नारदपुराणसूच्यामनुल्लिखिता विषयाः**—अधोनिर्दिष्टा विषया नेह सूच्यामुपात्ता इति दृश्यते—

| | |
|---|---|
| वंशः ( तुर्वस्वादिवंशाः ) | अ० २७७–२७८ |
| गौर्यादिपूजा | अ० ३२६ |
| देवालयमाहात्म्यम् | अ० ३२७ |
| शिक्षा | अ० ३३६ |
| गीतासारो यमगीता च | अ० ३८१–३८२ |

उपरिनिर्दिष्टा विषया अस्याः सूच्या अनन्तरं संनिवेशिता अग्निपुराण इति विज्ञायते। इदमपि भवितुमर्हति यद् ये विषयाः खलु नारदीयपुराणसूच्यां नान्तर्भाविताास्तेऽपि वस्तुतोऽन्तर्भाविता एव सूचीकारेण। यथा—उक्तं हि नारदीये—"शान्तयश्चापि विविधाः" इति (१।१९९।१६)। अत्र शान्तिपदेन ३२१तमाध्यायतः ३२५-तमाध्यायपर्यन्तम् प्रकरणमेवास्माभिः प्रदर्शितम्। अत्र ३२६–३२७ अध्यायौ अपि 'विविधशान्ति'-पदेन गृहीतौ भवितुमर्हतः। तथैव ११७-तमाध्यायगतः श्राद्धकल्पो न नारदपुराणसूच्यां संकलित इति प्रतिभाति, परन्तु 'गङ्गादितीर्थमाहात्म्यम्' (१।१९९।८) इत्यनेन श्राद्धोऽपि गृहीत एवेति वक्तुं शक्यते; गयातीर्थविवरणप्रसङ्ग एव श्राद्धविवरणकरणात्। तदिदं यथाप्रसंगं विवेचयिष्यते।

**अग्निपुराणस्य विलुप्ता भागाः**—निबन्धकारैर्बहव एतादृशाः सन्दर्भा उद्धृताः, ये प्रचलितेऽग्निपुराणे नोपलभ्यन्ते। डा० हाजरामहोदयैर्विस्तरेण विषयोऽयं प्रत्यपादि[1]।

तथैव दर्शनादिग्रन्थेष्वपि अग्निपुराणनाम्ना उद्धृतानि वचांसि न सर्वाणि मुद्रितपुराणे लभ्यन्त इति विज्ञेयम्। अग्निपुराणत्वेन उद्धृतानि वचनानि वह्निपुराणे, तथैव वह्निपुराणत्वेन उद्धृतानि वचनानि अग्निपुराण उपलभ्यन्ते न वेति अवलोकनीयम्। अग्निवह्निपुराणयोर्भेदोऽपि न सर्वैः पूर्वाचार्यैः स्वीकृत इत्यपि विज्ञेयम्। यदत्र तत्त्वं तदन्यत्र प्रतिपादयिष्यते।

---

१. वल्लालसेन-देवणभट्ट-माधवाचार्य-शूलपाणि-गोविन्दानन्द-गदाधर-रघुनन्दन-गोपालभट्ट-नरसिंहवाजपेयि-रूपगोस्वामिनः स्वकृतग्रन्थेषु बहुधाग्निपुराणं स्मृतवन्तः (Puranic Records. पृ० ३१८-३१९)। एतदुद्धृतानि सर्वाणि वचांसि न प्रचलितेऽग्निपुराणे दृश्यन्ते, क्वचिदंशत एव वचांसि उपलभ्यन्ते, क्वचिच्च पाठान्तररूपेण उद्धृतानि वचांस्यवलोक्यन्ते। विषयेऽस्मिन्न Puranic Records ग्रन्थस्य ३३८ तमं पृष्ठमप्यवलोकनीयम्।

अग्निपुराणत्वेन उद्धृतेषु वचनेषु क्वचित् 'कुरुशार्दूल-वीर'-इत्येवं रूपाणि संबोधनपदानि दृश्यन्ते, अतो गम्यते यत् प्राक्तनमग्निपुराणं प्रचलितात् पुराणाद् अंशतो विलक्षणमासीदिति (Puranic Records पृ० १३४-१३५) । प्राक्तनेऽग्निपुराणे के च विषयाः प्रतिपादिता इति हाजरामहोदयेन निपुणमुपदर्शितम् ( Puranic Records पृ० १४०) ।

**अग्निपुराणरचनाकालः**—पुराणरचनाकालविषय इदं सर्वैरभ्युपेयं यदिमानि पुराणानि न खलु रघुवंशमेघदूतादिग्रन्थवद् एकव्यक्तिकृतानि[1], न वा एककाले निर्मितानि च । चतुःसहस्रश्लोकसम्मिता लोमहर्षणिका पुराणसंहिताऽऽदौ चतुर्भिरन्यैः मुनिभिः प्रोक्ता काश्यपप्रभृतिभिः[2] । ततश्च ताः चतस्रः संहिता नैकसंप्रदायेषु समादृता जाताः । विभिन्नैः पुराणप्रवक्तृभिर्व्यासपदवीभागिभिः, संप्रदायाचार्यैरन्यैरपि विद्वद्भिः यथाकालं ताश्च मूलपुराणसंहिता उपबृंहिताः । एवं गच्छति काले सर्ग-प्रतिसर्गादिपञ्चलक्षणविलक्षणा बहवो विषया दानव्रततीर्थस्मार्त-धर्मादयः तान्त्रिककर्माणि च पुराणेषु संगृहीतानि आचार्यैः । अस्मिन् काल एव पुराणसंहितानां विभजनमभूत्, पुराणग्रन्थानां पृथङ्-नामान्यपि प्रचलितानि अग्नि-वायु-मत्स्यादीनि । एवमर्वाचीने काले अष्टादशपुराणग्रन्थरूपेण एकैव पुराणसंहिता विपरिणता, चतुःसहस्र-श्लोकपरिमाणं पुराणं च चतुर्लक्षश्लोकवत्तामधिगतवत् । प्रचलितेषु पुराणेषु मौलिकं वस्तु अल्पमेव, उपबृंहितं वस्त्वेव विपुलं प्रधानं च । अतएव कस्यचित् पुराणग्रन्थस्य रचनाकालः क इति प्रश्नो विभज्य वचनीयः ।

---

१. पुराणानां बहुकर्तृकत्वं पूर्वाचार्यसंमतम् । आह च मेधातिथिः—"पुराणानि व्यासादिप्रणीतानि" ( ३।२३२. मनुभाष्ये ) । अर्थशास्त्रजयमङ्ग-लायामेकः श्लोकोऽस्मिन् प्रसङ्गे उद्धृतो यत्र 'ब्रह्मभिर्विविधैः प्रोक्तम्' इत्युक्तम् । अत्र 'प्रोक्तं' नाम प्रवचनपद्धत्या विरचितमित्येव ।

२. वायु० ६१।५५-६१ ;
ब्रह्माण्ड० १।३५।६३-६६ ;
विष्णु० ३।६।१७-१६ ;
भाग० १२।६।४-७ ;
अग्नि० २७१।११-१२।

इदमत्र विज्ञेयं यदष्टादशपुराणनामगणना न अतिप्राचीना[1], अतोऽग्न्यादिपुराणानां नामतः प्रसिद्धिरपि अप्राचीनैवेति। अलंकार-विवरणप्रसङ्गे न अग्निपुराणनाम मम्मटेन स्मृतम्, प्रत्युत साहित्य-दर्पणकारेण। न खलु ख्रीष्टीयपञ्चमशताब्दीभवेन केनचिदग्निपुराणनाम स्मृतम्, अतो गम्यते पुराणस्यास्य प्रवर्तनमेतत्कालानन्तरमेवाभूत्। अग्निपुराणगता बहवः श्लोकाः पुराणान्तरेष्वपि दृश्यन्ते, अतो यावत्-कालपर्यन्तं नाग्निपुराणस्य नाम कण्ठतः स्मृतं भवति श्लोकोद्धरण-कर्तृभिः, तावत्कालपर्यन्तम् अग्निपुराणगतश्लोकोद्धरणमात्रेण नाग्नि-पुराणकालस्य निर्णयः कर्तुं शक्यते। प्रत्येकं पुराणेषु प्राचीनाः प्राचीन-तरा अंशा अपि सन्ति, नवीना नवीनतरा अंशाश्च। रचनारीतिदर्शनेन विषयप्रकृतिदर्शनेन च पुराणकालमनुमिमते विद्वांसः।

**अग्निकालविषये मतानि**—अग्निपुराणगतकाव्यादिविवरणपरमंशं विचार्य काणेमहोदयो वक्ति यदिदं पुराणं ख्रीष्टीयसप्तमशताब्दीतोऽप्य-र्वाचीनम्। किं च काव्यविचारात्मकोंऽशः नवमशताब्दीयः, ततोऽप्यर्वा-चीनो वा भवितुमर्हतीति ( History of Sanskrit Poetics पृ० ९ )।[2] अलंकारविमर्शात्मको भागो नवमशताब्द्यारम्भे कृतम् इति सुशीलकुमारदेमहोदयो ब्रूते[3]।

हाजरामहोदयोऽपि अस्य पुराणस्य नवमशताब्दीभवत्वमेव प्रति-

---

१. महाभारते स्वर्गारोहणपर्वणि अष्टादशपुराणपदमस्ति; इदं प्रक्षिप्तमिति निर्णीतं विद्वद्भिः। क्वचिदुपनिषत्स्वपि 'अष्टादशपुराणनाम' स्मृतम्। एताश्च उपनिषदोऽर्वाचीना इति नानेनोल्लेखेन अष्टादशपुराणानां प्राचीनता सिद्धा भवति। पुराणविद्याऽतिप्राचीना, वेदेष्वपि पुराणस्मरणात्; प्रचलिता पुराणग्रन्थाश्च अर्वाचीना इत्येवास्माकं मतम्।

२. The foregoing discussion goes to establish that the Agnipurana is later than the seventh century at least and that the section on Poetics was compiled about or a little after 900 A. D. and probably after 1050 A. D.

३. J. R. A. S. 1923 p. 527–549; Poona Orientalist II, p. 15–17.

पादितवान्[1]। एतन्निर्णयार्थं तेन बहूनि प्रमाणानि प्रदत्तानि, तानि च तत्कृतग्रन्थ एव द्रष्टव्यानि। S. B. Chowdhury महोदयः खल्वष्टम-शताब्दीमध्यतो नवमशताब्दीमध्यपर्यन्तमस्य काल इति चिन्तयति ( J. A. H. R. S. vol. p. 127-134 ).

कैश्चिदपि लिङ्गैरिदमप्यनुमीयते यदिदं पुराणं देवीपुराणतोऽर्वाचीन-मिति ( द्र० हाजरामहोदयस्य निबन्धः, Purana Vol IV p. 354–355 )। हाजरामहोदयेन इदमपि अभ्यधायि यदिदं पुराणम् ओड्रदेशपूर्वभागे निर्मितम्, अथ वा पश्चिमवंगदेशस्य पश्चिमभागे। अत्र द्वितीयपत्त एव ज्यायानित्यप्यस्य मतम् ( Puran Vol. IV p. 355 )।

अग्निपुराणे तान्त्रिककर्मप्रतिपादनं बहुलं दृश्यते। इदं नवीनतरं वस्तु इति तन्त्रविवरणपरे प्रघट्टके प्रतिपादयिष्यामः।

**अग्निपुराणस्य प्रतिष्ठा प्रामाण्यं च**––बहुविधेषु निबन्धग्रन्थ-व्यतिरिक्तेषु शास्त्रविचारपरायणग्रन्थेषु अग्निपुराणनाम्ना वचांसि उद्ध्रियन्ते, अतो गम्यते यदिदं पुराणं प्रसिद्धमासीत् प्रामाणिकं च। तथा हि—

( १ ) ललितासहस्रनामभाष्ये अग्निपुराणवचांसि उद्धृतानि (पृ० ३५, ४२, ८९ )। 'अग्निपुराणीयः कोशः' इति पदं प्रयुज्य अग्निवचांस्यत्र नैकत्रोद्धृतानि भाष्यकारेण भास्करेण ( पृ० ३२, ३५, ३७, ४२, ६०, १२१, १४४, १७२ )।

( २ ) गोदावरमिश्रकृते योगचिन्तामणिग्रन्थे अग्निपुराणवचनं स्मृतम् ( द्र० गोडेकृतो Godavara Misra and his works नामको निबन्धः, Poona Orientalist Vol. IX, nos 1–2 )।

( ३ ) वास्तुशिरोमणिनामधेये ग्रन्थेऽपि अग्निपुराणवचनं स्मृतम्। अत्र एतद्विषयको गोडेकृतो निबन्धो द्रष्टव्यः ( A. B. O. R. I. Vol. XXXV pp. 35-41 ).

---

१. Inspite of these differences of opinions, there can be no serious objections if we hold that the present Agnipurana was compiled sometime during the ninth century ( Puranic Records p. 138 ).

( ४ ) लक्ष्मणपण्डितकृताद्वैतसुधायामपि अग्निवचनानि स्मृतानि ( द्र० गोडेकृतः The exact date of the Advaitasudha नामको निबन्धः, Poona Orientalist Vol. X, no. 1–2 )।

( ५ ) भरतमुनिरग्निपुराणमाश्रित्य शास्त्रं प्रणीतवानिति काव्यप्रकाशादर्शे महेश्वर आह। अन्येऽपि केचन आलंकारिकास्तथैवाहुः।

अन्येष्वपि ग्रन्थेषु अग्निपुराणं प्रमाणत्वेन स्मृतम्। तदिदं यथाप्रकरणं दर्शयिष्यते।

[ २ ]

अथात्र अग्निपुराणगतान् विषयान् अवलम्ब्य पौराणिकीं दृष्टिमाश्रित्य किमपि समासतो विचार्यते। विषयाश्च बहुविधाः, ते च विभागश इह निर्दिश्यन्ते—

( १ ) पञ्चलक्षणविषयः।
( २ ) वेद-वेदाङ्ग-वैदिकधर्माः ।
( ३ ) स्मृति-पुराण-पौराणिकधर्माः।
( ४ ) तन्त्र-तान्त्रिकधर्माः।
( ५ ) दर्शनप्रस्थानानि दार्शनिकप्रमेयाश्च।
( ६ ) लौकिकानि शास्त्राणि।
( ७ ) भूवृत्तं भुवनकोशश्च।
( ८ ) ऐतिहासिक-सांस्कृतिक-तत्त्वानि।
( ९ ) प्रकीर्णा विषयाः।

## ( १ ) पञ्चलक्षणविषयः

पञ्चलक्षणेति पदेन[१] सर्ग-प्रतिसर्ग-वंश-वंशानुचरित-मन्वन्तराणि गृह्यन्त इति शिष्टाः। अयमत्र मातृकाश्लोकः—

---

१. सर्गादिपञ्चलक्षणविवरणपरः श्लोकः पुराणेषु प्रसिद्धः—वायु० ४।१०–११; विष्णु० ३।६।२५; अग्नि० १।१४; ब्र० वै० ४।१३१।६; कूर्म० १।१।१२; मत्स्य० ५३।६४; ब्रह्माण्ड० १।१।३७-३८; प्रभास० २।८४; देवीभाग० १।२।१८; ।

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।
वंशा( श्या )नुचरितं चैव पुराणं पञ्चलक्षणम् ॥[1]

एते विषया अग्निपुराणे सुष्ठूपलभ्यन्ते, यद्यपि तीर्थपूजाव्रत-विद्यादयोऽत्र प्राधान्यं भजन्ते। क्वचिद् वंश्यानुचरितमिति पठ्यते, वंशे भवं वंश्यानुचरितमिति।

**सर्गप्रकरणम्**—१७-२० अध्यायेषु। अत्र प्रजापतिकृताः सर्गा अपि प्रपञ्चिताः। सांख्यानुगृहीतमिदमिति व्यक्तमेव[2]। एवं सत्यपि वैष्णवसंप्रदायदृष्टिरत्र स्पष्टं प्रतीयते। अन्येष्वपि पुराणेषु सर्गप्रकरणं दृश्यते[3]। अग्निपुराणगताः केचन श्लोका मनुश्लोकसदृशा एव ( द्र० मनु० १।८-१३ )। प्राकृतवैकृतादिसर्गाणां विषये ललितासहस्रनामभाष्यमालोचनीयम् ( पृ० १०४-१०५ )।

**प्रतिसर्गप्रकरणम्**—नित्यनैमित्तिकप्राकृतात्यन्तिकभेदाच् चतुर्विधः प्रतिसर्गः ( प्रलयः ) ३६८-३२८ अध्यायेषु वर्णितः। विषयोऽयं पुरा-

१. वेंकटाचलमाहात्म्ये—"सृष्टिसंहारवंशानां वंशानुचरितस्य च। कथां मन्वन्तराणां च" इति पठ्यते ( १।४ ), अत्रार्थः समानः। क्वचिच्च पञ्च लक्षणमन्यथा वर्णितम्—वंशानुचरितस्थले 'भूम्यादेश्चैव संस्थानमि' ति पठ्यते ( अमरकोशगत-पुराणशब्दव्याख्यानं रामाश्रमीटीकायां द्र० ) अन्यत्र च—"ब्रह्मविष्ण्वर्करुद्राणां माहात्म्यं भुवनस्य च। संहारश्च प्रदृश्येत पुराणं पञ्चलक्षणम्" इति ( प्रभास० २।८४-८५ )।

२. The Sankhyization of the Emanation Doctrine shown in a Critical Analysis of Texts—Dr. P. Hacker ( Purana vol. iv ? No. 2 ).

३. पुराणे यत्र प्राधान्येन सृष्टिवर्णनं तान्येव स्थलानीह प्रदर्श्यन्ते—ब्रह्म० अ० १; पद्म० १।२ अ०; ५।२-३ अ०; विष्णु० १।२-५; वायु० ३-६ अ०; भाग० ३।१०; ३।२०; नारदीय० १।४२ अ०; मार्क० ४७-४८ अ०; भविष्य० २।५-६; ३।५-१०; ब्र० वै० ब्रह्म० ३-७; प्रकृति० १-३ अ०; लिङ्ग १।३-५ अ०; कूर्म० १।४-१०; गरुड़० १।४ अ०; मत्स्य० २-३ अ०; देवीभाग० ३।१-७; अ०; सौर० २१-२४ अ०; हरिवंश० १।१-३।

णान्तरेष्वपि दृश्यते[१]। प्रतिसर्गमधिकृत्य बहवो विशिष्टार्थकाः शब्दाः प्रयुक्ताः पुराणकर्तृभिः—अन्तरप्रलयः ( ब्रह्म० २३२।११ ); अन्तराला उपसंहृतिः ( विष्णु० ६।२।४० ), आभूतसंप्लवः, उदाप्लुतम् ( भाग० ३।८।१० ), उपसंहारः ( विष्णु० ६।१।७ ), उपसंहृतिः, एकार्णवावस्था, तत्त्वप्रसंयमः ( वायु० १०२।४७; ब्रह्माण्ड० ३।३।२५ ); प्रतिसंक्रमः ( भाग० ३।१०।१४ ), प्रतिसंचरः, प्रतिसंसर्गः, प्रत्याहारः, प्रलयः, महाप्रलयः, लयः, संहरणम् , संहारः, संप्लवश्च ( भाग० १२।४।३४ )। क्वचिदाख्यायिकावर्णनेऽपि प्रतिसर्गविवरणं कृतमिति विज्ञेयम्।

क्वचिच्च प्रतिसर्गपदेन चन्द्रादीनां स्वस्वराज्येऽभिषेचनं कथ्यते। मत्स्यपुराणेऽष्टमेऽध्यायेऽस्मिन्नर्थे प्रतिसर्गपदं प्रयुक्तम्। आग्नेयेऽपि ( १९।२२-२९ ) एतादृश एव प्रतिसर्गो विवृतः।

आग्नेये प्रतिसर्गप्रसङ्गे दुःखम् , आत्मज्ञानम् , नरकाः, योगविधिश्चेत्येते विषया विवृताः। आत्यन्तिकलयज्ञानाय एतेऽवश्यं ज्ञेया इति विज्ञेयम्। दर्शनादिविचारप्रसङ्गे खल्वेते विषया विशदीभविष्यन्ति।

वंशः—२७३तमाध्यायतः २७८तमाध्यायपर्यन्तमिदं प्रकरणम्। वंशपदेन 'राज्ञां वंश' इत्यर्थो गृह्यते[१], न तु ऋषि-देव-दैत्यादीनाम्। अतएव क्वचित् पुराणे 'राज्ञां वंश' इति विस्पष्टमुच्यते। देवादीनां वंशा आख्यानोपाख्यानादिभिः पदैर्गृह्यन्ते; आख्यानादीन्यपि पुराणसंहितायां

१. ब्रह्म० २३१।१-२३३।७५;
विष्णु० ६।३।१-७।१०४;
वायु० १००।१३२-१०२।१३५;
भाग० १२।४ अ०;
मार्क० ४६।१-४४;
कूर्म० २।४५।४-४६।२५;
गरुड० १।२१५।४-२१७।१७;
ब्रह्माण्ड० ३।१।१२८-३।११३।

प्रलयविषये प्रकीर्णा निर्देशाः प्रकरणबहिर्भूता अपि लभ्यन्ते ( विष्णु० १।७।४१-४३ )।

२. राज्ञां ब्रह्मसूतानां वंशस्त्रैकालिकोऽन्वयः (भाग० १२।७।१६ )। इदमेव मतं शिवादिपुराणेष्वपि कण्ठत उक्तम्।

संकलितानि। पुराणप्रवक्ता सूतः खलु 'वंशकुशल' इत्युच्यते ( वायु० ४।३ )। पुराणविषयेषु वंशप्रकरणमतिप्राचीनमित्यभ्युपेयम्। विषयोऽयमसांप्रदायिक इतिवृत्तानुसारी च। राजवंशोऽयं सूर्य-सोमवंशतो द्विधा। क्वचित् पुराणे वंशप्रस्तावे भविष्यराजवंशोऽपि कथितः। स च कलियुगस्थनृपविवरणात्मक एव। अग्निपुराणे भविष्यनृपवंशो नोक्तः।

वंशविवरणप्रामाण्यादिविषये मतद्वैधं दृश्यते[1]। क्वचिच्च मतविरोधोऽपि[2]। अग्निपुराणगत-वंशप्रकरणं सुविचार्य यत् पर्जिटरमहोदयेनोक्तं तत् सारवदिति विज्ञायते। अनेनोक्तं यदग्निपुराणगतं वंशविवरणम् अप्राचीनम्। अस्मिन् प्रकरणे प्राचीनाः श्लोकाः परित्यक्ताः, नवीनान् श्लोकान् विरचय्य अग्निपुराणकारः प्रकरणमिदं संक्षेपेण विरचितवान्। नृपनामप्रस्तावे तेषां कर्म प्रायेण नोल्लिखितम्। इक्ष्वाकुकुलविवरणप्रसंगे अग्निपुराणमनुचकार मत्स्यपुराणम्। वंशान्तरविवरणे सामान्यतः पुराणमतमनुसृतमग्निपुराणे। कान्यकुब्ज-काशी-

---

१—किरफिलो वक्ति—" Of the first named two compositions that of the Brahma and Harivamsa, is doubtless the oldest—thus not that of the Brahmanda and Vayu, as Pargiter supposes" ( J.V.O. 1. Vol. viii. p.29 ).

२. वंशादिविषये यत्र मतपार्थक्यं विरोधो वा तत्र कल्पयुगादिभेदेन व्यवस्था करणीयेति प्राचीना पद्धतिः। श्रीधर आह—"यत्र यत्र नाम्नां वैलक्षण्यं दृश्यते तत्र कल्पयुगादिभेदेन व्यवस्थापनीयम्"। नीलकण्ठोऽप्याह — "अन्यत्र तु वैन्यस्यैव यज्ञे अग्निकुण्डात् सूतमागधौ जातावित्युक्तम्। तत् कल्पभेदात् समाधेयम्" ( हरिवंश० १।५।३४ )। यथाह—"क्वचित् क्वचित् पुराणेषु विरोधो यदि दृश्यते, कल्पभेदादिभिस्तत्र व्यवस्था क्रियते बुधैः" इति। न खलु पुराणे वंशगतानि सर्वाणि नामानि कथ्यन्ते, प्रत्युत प्रसिद्धान्येव प्रायेण। यथोक्तम् ( वंशवर्णनान्ते )-"एतद्वः कथितं सर्वं समासव्यासयोगतः। पुनरुक्तबहुत्वाच्च न शक्यं तु युगैः सह" इति ( वायु० ६६।४६१ )। अपि च—"न शक्यं विस्तरं तेषां सन्तानानां परम्परा...वक्तुम्" ( ६६।४५८ )। ब्रह्माण्डेऽपि—"एते इक्ष्वाकुदायादा राजानः शतशः स्मृताः॥ वंशे प्रधाना ये त्वस्मिन् प्राधान्येन तु कीर्तिताः" ( २।६३।२१३–२१४ )।

वंशविवरणप्रसंगेऽत्र भ्रान्तिरवलोक्यत इति[1]। अस्माभिस्तु मतमिदं युक्तम् इति स्वीक्रियते।

इतिवृत्तविचारप्रघट्टके वंशवंशान्तर्गतनामान्याश्रित्य तद्गतसमस्याविषये विचारः करिष्यते।

**वंशानुचरितम्**—वंशगतानां राज्ञां चरितानि वंशानुचरितपदेन उच्यन्ते, यथाह वेदान्तकल्पतरुकारः—"वंशानुचरितं तत्कर्मेति" (२।१।३)। राजकृत-कर्मानुस्मारका बहवः श्लोकाः पुराणेषूपलभ्यन्ते 'अत्रानुवंशश्लोकोऽयम्' इत्यादिसन्दर्भेण (वायु० ९९।२७८; ९९।२९२)। वंशपठितराजानुगता राजकर्मख्यापनपराः श्लोका एव अनुवंशश्लोका इति। आनुवंश्यश्लोकस्वरूपमाह नीलकण्ठः—"परम्परागत आख्यान-श्लोक" इति (वनपर्व १२९।८)। अस्ति चैतेषां प्रामाण्यम्। राज्ञां कर्माणि प्रायेण इतिवृत्त्यनुसारीणीति अनुसन्धानैः सिध्यति।[2]

---

१. The three Puranas contain all or nearly all the genealogies, the Garuda, Agni, and Bhagavata. Their accounts are all late recompilations, the Bhagavata being one of the very latest, about the ninth century A.D. They do not reproduce any of the old verses except rarely, but have restated the genealogies in fresh verses, generally in more condensed form. The Garuda and Agni give merely bald pedegress with hardly any incidental allusions. The Garuda and Bhagavata follow the Vayu tradition as regards the Aiksakus and the Agni the Matsya tradition, As regards the other dynasties, all three follow in a general way the common tradition. All three however have peculiarities of their own. The Agni has erred seriously as regards the Kanyakubja and Kasi dynasties ( A.I.H.T.p. 80 ).

२. Recently Altekar in his presidential address to the Indian History Congress, 1939, has tried to

अस्मिन् वंशप्रकरणे देवासुरकृता द्वादश संग्रामा अभिहिताः ( अ० २७६ )। प्रकरणमिदं वायौ ( ९७।७२-८७ ) मत्स्ये (४७।३८-५२) ब्रह्माण्डे ( २।७२।६९-८८ ) चापि दृश्यते। अत्र संग्रामः खलु दाय-निमित्तक इत्युक्तम्। तदिदं शान्तिपर्वण्यप्युक्तम्—

इदं तु श्रूयते पार्थ युद्धे देवासुरे पुरा।
असुरा भ्रातरो ज्येष्ठा देवाश्चापि यवीयसः॥

तेषामपि श्रीनिमित्तं महानासीत् समुच्छ्रयः।
युद्धं वर्षसहस्राणि द्वात्रिंशदभवत् किल॥[1]

( ३३।२५-२६ )

**मन्वन्तराणि**—१५० तमेऽध्याये चतुर्दश मन्वन्तराणि वर्णितानि स्वायंभुव-स्वारोचिषादीनि। पुराणान्तरेष्वपि मन्वन्तरविवरणमुपलभ्यते—ब्रह्म० ५ अ०; ब्र० वै० २।९३ अ०; विष्णु० ३।१-२ अ०; हरिवंश० १।७ अ०; मार्क० ५३-१०० अ० ( अतिविस्तृतं विवरणम् ), कूर्म० १।५१ अ०; नारदीय० १।४० अ०।

मन्वन्तरनामानि मनुना कीर्तितानि सप्तैव ( १।६१-६२ )। विष्णु-धर्मसूत्रे मनुवत् कथनं दृश्यते ( २०।१-१५ )।

मन्वन्तरविषये वैज्ञानिक्या दृष्ट्याह गुरुपदहालदारमहोदयः—"पुरा हि पृथिवीकक्षपथः वृत्तवत् प्रतीयमान आसीत्। सौरजगतः आपीडन-शक्त्या तद्वृत्तं वृत्ताभासरूपेण परिणतम्। यावत् कालं वृत्ताभासस्यास्य दीर्घाक्षः दीर्घतरो दीर्घतमो भवति ( सुतरां ह्रस्वाक्षः ह्रस्वतरो ह्रस्वतमो जायते ) तावानेव मन्वन्तरस्य अर्धपरिमितः कालः। वृत्ताभासश्च यदा वृत्तवद् भवति तदा पूर्णो मन्वन्तरकाल इति। मन्वन्तरक्रमोऽयं प्रचलत्येव यावत् प्रलयम्। षड् मनवोऽतीताः, वर्तमानश्च वैवस्वतो मनुः"

show how the pre-Bharata War history of India can be reconstructed from the evidence of the Puranas and Epics with the help of the Vedic evidence ( Cultural History from the Vayu Purana–Introduction ).

१. असुराणामग्राधिपत्यं वेदेष्वप्युक्तम्—"असुराणां वा इयं [ पृथिवी ] अग्र आसीत्" इति ( तै० ब्रा० ३।२।६।६ )। अत्र असुरपदेन दैत्या दानवाश्च गृह्यन्ते, यथोक्तम्—"इत्येते त्वसुरा प्रोक्ता दैतेया दानवाश्च ये" ( वायु० ६८।१४ )।

( सनत्सुजातभाष्यम् पृ० ६७३-६७४, वंगभाषीयो ग्रन्थः )। विचारोऽयं संगतो न वेति सुधीभिर्विभाव्यम्।

मनूनामन्तरमवकाशोऽवधिर्वा मन्वन्तरमिति क्षीरस्वामी (अमरटीका० १।३।२२)। चतुर्युगसहस्रं खलु ब्रह्मणो दिनम्। अयमेव कल्पः, चतुर्दशमनुपरिमितोऽस्य काल इति ( विष्णु० ६।३।११-१२ )।

इदमत्र विज्ञेयं—युगमन्वन्तरादिविषयकः पौराणिकसन्दर्भः सत्यमितिवृत्तमाहेति नोररीक्रियते खल्वाधुनिकैर्विद्वद्भिः[1]।

## ( २ ) वेद-वेदाङ्ग-वैदिकधर्माः

आग्नेये वेदादिविषयेषु विशिष्टं कथनमुपलभ्यते, तथाहि—

वेदास्तदङ्गानि च अपरविद्यायां गणितानि (१।१६-१७)। सन्दर्भोऽयं मुण्डकोपनिषत्प्रतिष्ठितः ( द्रश्यतां १।१।४-५ )। मतस्यास्याकरस्थलम् आथर्वणी श्रुतिरिति स्पष्टमुक्तमप्याग्नेये ( १।५ )। मुण्डकं खलु आथर्वणोपनिषदिति भाष्यकाराः। पुराणान्तरेष्वप्येतादृशी विद्यागणना दृश्यते (विष्णु० ६।५।६५; ब्रह्म० २३३।६२-६३)[2]।

मुण्डकोपनिषदा सह अग्निपुराणमतस्य किमपि वैलक्षण्यमप्यवलोक्यते। पुराणे मीमांसाधर्मशास्त्रादीन्यपि वेदवेदाङ्गाभ्यां सह अपरविद्यायां परिगणितानि, मुण्डके पुनर्वेदा अङ्गान्येव। किमर्थं पुराणे मीमांसादीनामन्तर्भावः कृतः, किं वाऽस्य बीजमिति जागर्त्येव प्रश्नः।

इदं प्रतीयते यन्मुण्डकस्य अपरोऽपि कश्चिद् वृद्धपाठ आसीत्,

१. How could a tradition of several Manus survive such Pralaya ? A rationalistic interpretation requires that all this that is stated in the Puranas is mere conjecture and imagination and that one can not safely build theories about the governance of society in ancient times on the accounts contained in the Puranas ( H.Dh. S. Vol. v. p. 693 ).

२. 'ऋग्वेदाद्यपरं ब्रह्म' इत्याग्नेयवाक्ये ( १।६ ) ऋग्वेदस्यैव नाम तस्य प्राधान्याद् गृहीतमिति विज्ञेयम्।

यस्मिन् मीमांसाधर्मशास्त्रादीनि अपरविद्यायां गणितानि। मुण्डक-शांकरभाष्यटीकाकृता नारायणेन सोऽयं पाठः प्रादर्शि, पाठोऽयमत्र प्रक्षिप्त इत्यपि निगदितम्—"इतिहासादीनि पञ्च आचार्येन व्याख्यातानि तेन प्रक्षिप्तानीति गम्यते" इति। अत्र 'आदि'-पदेन पुराण-न्याय-मीमांसा-धर्मशास्त्राणि गृह्यन्ते। केषुचिच्च मुण्डकोपनिषत्कोशेषु पाठोऽयं दृश्यत एव। यथाह विन्ध्येश्वरीप्रसादद्विवेदः—"अस्मन्निकटे वर्तमानेऽतिप्राचीने पुस्तकेऽयं पाठो वर्तते। युक्तश्चायम्, अन्यासूप-निषत्सु मन्वादिस्मृतिष्वपि तथा पातञ्जले व्याकरणमहाभाष्ये च इतिहासपुराणन्यायमीमांसादीनाम् परिकीर्तनात्...मुद्रितमुण्डकोपनिषदि तथापाठाभावात् स चांशो निपतित इति प्रतिभाति। ऋग्वेदीयचरण-व्यूहे तथा यजुर्वेदीयचरणव्यूहेऽपि दृश्यते—"प्रतिपदम् अनुपदं छन्दो-भाषा धर्मो मीमांसा न्यायतर्का इत्युपाङ्गानि" इति (न्यायवार्त्तिक-भूमिका पृ० २)।

यदि नाम पुराणांशोऽयं मुण्डकवृद्धपाठप्रतिष्ठः स्यात्, स पाठोऽपि शंकराचार्यादर्वाचीन इति प्रमितं भवेत्, तर्हि पुराणस्यायमंशः 'अष्टम-शताब्दीतोऽप्यर्वाचीन' इति सिद्धं भवति। शंकरः खलु अष्टमशताब्दीभव इति इतिवृत्तविदः।

**वेदशाखा**—आग्नेये वेदशाखाविवरणं लघु भ्रष्टपाठयुतं च दृश्यते (२७१।१-१०)। पुराणान्तरे विषयोऽयं विशदीकृत इति ज्ञेयम् (विष्णु० ३।४-६ अ०; वायु० ६०-६१ अ०; ब्रह्माण्ड० १।३४-३५ अ०; भाग०१२।६-७ अ०)। आग्नेये 'आश्वलायनशाखा' निर्दिष्टा (२७१।२)। शाखेयं न वाय्वादिषु स्मृता। तथैव 'शाङ्खायनीशाखा'-ऽप्यत्रैव स्मृता, नान्यस्मिन् पुराणे। इमे शाखे अतिप्रसिद्धे इति पुराणे कण्ठत उल्लेखाद् विज्ञायते[1]। शाखान्तराणां परिचयादिकं ग्रन्थान्त-

---

१. आह सत्यव्रतसामश्रमी—"अस्मन्मते तु शाकला माण्डूकेया चेत्येत एव द्वे प्राचीनतमशाखे; ऐतरेयारण्यके एतयोरेव द्वयोराचार्यनाम्नोराम्नान-दर्शनात्, अपि शाङ्खायनी स्यान्माण्डूकेयानुशाखा माण्डूकेयभेदैवेति। त एत एव द्वे अध्येतृभेदात् पाठादिभेदत एकविंशतित्वमापन्ना। तत्र चेदानीं माण्डूकेयानां शाङ्खायन्येवैका लुप्तावशिष्टा शाकलानामाश्वलायनीति। अत-एवाग्निपुराणे एतयोरेव द्वयोः शाखयोर्नामनिर्देशो विद्यते (२७१।२)-भेदः

रतोऽवगन्तव्यम् ।[1]

व्यासशिष्यैश्चतुर्भिः पैलादिभिर्वेदा व्यस्ता[2] इति १५०।२३-३० इत्यत्रोक्तम् । मतमिदं सर्वत्र पुराणे प्रसिद्धम् ।

**वेदपरिमाणम्**—लक्षपरिमिता वेदमन्त्रा इत्याग्नेये उक्तम्— "ऋगथर्व तथा साम यजुः संख्या तु लक्षकम्" ( २७१।१ ) । यद्यपि परिमाणमिदं न निरुक्त-बृहद्देवतादिषु प्राचीनग्रन्थेषु स्मृतं तथापि वैदिकसंप्रदाये नूनमस्य परिमाणस्य प्रसिद्धिरासीदिति विज्ञायते । उक्तं च चरणव्यूहे--"लक्षं तु चतुरो वेदाः ( पृ० ५० ) । टीकाकारो महिदासोऽत्र न किमपि व्याख्यातवानिति महदाश्चर्यम् । पुराणेऽपि इयं प्रसिद्धिरवलोक्यते । विष्णुपुराणे वेदपरिमाणमभिलक्ष्य 'शतसाहस्रसंमित' इति पदं प्रयुक्तम् ( ३।४।१ ) । शतगुणितं सहस्रं शतसहस्रं, शतसहस्रमेव शतसाहस्रं, स्वार्थेऽण् । वायवीये 'शतसाहस्रसंज्ञितेति' पदमस्ति, अर्थश्च समान एव । वेदपरिमाणविषये प्रसिद्धिरियं कथं जातेति सुधीभिर्विभाव्यम् ।

अस्मिन् अध्याये कासाञ्चन शाखानां परिमाणमपि निर्दिष्टम् । पुराणपाठश्च अत्यन्तं भ्रष्ट इति कृत्वा श्लोकानाम् अर्थनिर्धारणं दुर्घटं प्रतिभाति ।

वेदविषये अन्यदपि विवेचनीयं तथ्यमुक्तम्—हयग्रीवदानवेन वेदोऽपहृतः, मत्स्यरूपी विष्णुस्तं जघानेति ( २।१६-१७ ) । वेदनाश-तदुद्धारविषयका एतादृशाः सन्दर्भाः पुराणेष्वतिप्रसिद्धा एव । पूर्वकालेऽपि

---

शाङ्खायनश्चैक आश्वलायनो द्वितीय' इति । अद्याप्येते एव द्वे शाखे विद्येते ( ऐतरेयालोचन पृ० १३२ ) । एतदनन्तरमेते शाखे अधिकृत्य बहु उक्तं सामश्रमिणा ।

१. 'पुराणगत वेदविषयक सामग्री का समीक्षात्मक अध्ययन' नामधेये ग्रन्थे वेदशाखानां परिचयादिकं विस्तरेणोपवर्णितम् । ग्रन्थोऽयं शीघ्रं मुद्रितो भविष्यति ।

२. विभागोऽयं यजुर्वेदस्यैवेति वैष्णवे । अत्र यजुर्वेदपदेन चत्वारो वेदा उपलक्षिताः, यजनार्थत्वाद् वेदानाम् । टीकाकृच्छ्रीधरोऽपि तथैव वक्ति ( ३।४।११ ) । अस्ति च प्रसिद्धिः—'सर्वे वेदा यजुःप्रोक्ताः' इति ।

बहुधा वैदिकवाङ्मयस्य वैदिकधर्मस्य च ह्रयो जात इत्येव तत्त्वम् आभिराख्यायिकाभिर्व्यज्यते[१]।

इदमप्युक्तं—कलियुगान्ते वाजसनेयको वेदो दशपञ्चशाखामयो भविष्यतीति ( १६।५–६ )। कलियुगे कृत्स्नस्य वेदस्यापक्षयो नाशो वा सर्वपुराणसंमत इति नातिरोहितं विदुषाम्[२]। एवं सत्यपि वाजसनेयनाम्नो ग्रहणं किमर्थमिति प्रश्न उदेति। अत्राह नीलकण्ठः ( हरिवंशगत-कलियुगवर्णनपरायणश्लोकव्याख्यानावसरे, स श्लोकोऽप्ययमेव—'सर्वे ब्रह्म वदिष्यन्ति सर्वे वाजसनेयिनः' इति ( ३।३।१३ )—"शाखान्तर-लोपात्। तेन वेदत्रयसाध्यो यज्ञ उत्सन्नो भविष्यति इति भावः। इदानीमेव पश्चिमदेशे तथा दर्शनात्"।

अथात्र वेदाङ्गान्यधिकृत्य आग्नेयमतं व्याख्यायते—

**छन्दःशास्त्रम्**—आग्नेये शास्त्रस्यास्य सारः प्रदत्तः, स च पिङ्गला-नुसारी ( ३२८–३३५ )। उक्तमपि "छन्दो वक्ष्ये...पिङ्गलोक्तम्" ( ३२८।१ )। अत्र गणाः, छन्दोदेवताः, पादविचारः, उत्कृत्यादिच्छ-न्दोभेदाः, सम-अर्धसम-विषमभेदाः, यतिः, प्रस्तारश्चेत्येते विषया व्याख्याताः। बहुषु स्थलेषु पाठाशुद्धयो दृश्यन्ते।

बहुषु छन्दःशास्त्रेषु सत्सु पिङ्गलछन्दःशास्त्रमेवानुसृतमग्निपुराण-कारेण, यतो हि इदमेव सर्वसाधारणमिति। आह छन्दोविचिति-व्याख्याता हृषीकेशः—"याः षट् पिङ्गलनागाद्यैः छन्दोविचितयः कृताः। तासां पिङ्गलनागीया सर्वसाधारणी भवेत्" इति।

**शिक्षा**—शिक्षा नाम वर्णोच्चारणविद्या। आग्नेये शिक्षा संक्षेपेण प्रोक्ता ( ३३६ अ० )। प्रकरणमिदं पाणिनीयशिक्षासंक्षेपमात्रम्। इयं च सुष्ठु संपादिता डा० मनोमोहनघोषमहोदयेन, प्रकाशिता च कलिकाता-विश्वविद्यालयेन।

---

१. मत्स्य० ५३।५–७; वराह० १।५; ११३।२०; रेवा० ६ अ०; भाग० ५।१८।६; पद्म० ६।२५७।१–३१; भाग० ११।४।१७; पद्म० ४।२२।२३।

२. द्रष्टव्यानि कलिवर्णनस्थलानि—ब्रह्म० २२६–२३० अ०; वायु० ५८ अ०; मत्स्य० १४४ अ०; कूर्म० १।३० अ०; विष्णु० ६।१–२ अ०; भाग० १२।२ अ०।

अत्र पाणिनीयशिक्षेति पदेन 'श्लोकमयी शिक्षा' विवक्षिता, न पुनः सूत्रमयी अप्रसिद्धा शिक्षा[1]।

शिक्षाया अस्याः संपादनं कुर्वता घोषमहोदयेन यदुक्तं तदत्र संग्रहेणोच्यते—अस्यां शिक्षायां स्वल्पः प्रक्षिप्तभागोऽस्ति, स च याजुषपाणिनिशिक्षाप्रभावेण कृत इत्यपि विज्ञायते[2]। शिक्षाया आरम्भे यौ द्वौ श्लोकौ स्तः, तौ चिन्तनीयार्थौ इत्यपि घोषमहोदयेन विवृतम्[3]। आग्नेयशिक्षायां

---

१. सूत्रमयी पाणिनीया शिक्षा प्राच्यविद्याप्रतिष्ठानतः प्रकाशिता। इयं पाणिनीयैवेति महता संरम्भेण श्रीयुधिष्ठिरमीमांसकः प्रतिपादयति (साहित्य ७।४)। श्लोकात्मिका शिक्षा खलु पाणिन्यनुजेन पिङ्गलेन रचितेति शिक्षाप्रकाशटीकाकाराः—"ज्येष्ठभ्रातृभिर्विहिते व्याकरणे अनुजस्तत्रभगवान् पिङ्गलाचार्यस्तन्मतमनुभाव्य शिक्षां वक्तुं प्रतिजानीते" इति। शिक्षेयमर्वाचीने काले केनचित् अग्निपुराणे संयोजिता, यतो हि अस्याः शिक्षाया निर्देशो न नारदीयपुराणसूच्यां विद्यते। संयोजनकारः शिक्षेयं पाणिनिकृतेति न कथितवान्, अतः प्रतीयते अस्याः पिङ्गलकृतत्वं मन्यमानेन संयोजकेन पिङ्गलछन्दःसारानन्तरं शिक्षाप्रकरणमिदं संनिवेशितमिति। श्लोकमयी पाणिनीयशिक्षा न सर्वथा पाणिन्यनुशासनानुसारिणीति मीमांसकमहोदयेन स्वकृते निबन्धे प्रतिपादितम्।

२. This interpolation seems to be a work of some late scribe. who under the influence of Yajus recension of the Paninian Siksha supplied the reading रङ्गश्च etc. to the erroneously repeated Agnipurana 3b–4a unfortunately without any advantage. From a consideration of the possible age of the Agnipurana ( c. 800 A.c. ) later than Panini by much more than 1000 years, we may be justified to make an assumption about the defective tradition ( Introduction p. 11–12 ).

३. It is evident that the compiler of the Agnipurana recension of the Paninian Siksha too felt a difficulty over first two couplets of the Paninian

शिक्षाकारत्वेन पाणिनेर्नाम नोक्तम्, यद्यपि छन्दःप्रसंगे पिङ्गलस्य नाम स्मृतम्, अतो गम्यते शिक्षाकारोऽयं न पाणिनिकर्तृत्वमस्याः शिक्षाया ज्ञातवानिति। मधुसूदनसरस्वती खलु पाणिनिमेव शिक्षाकारत्वेन सस्मार[१]।

भवतु नाम यत् किमपि, इयं श्लोकात्मिका शिक्षा न पाणिनिकृता भवितुमर्हति—'अथ शिक्षां प्रवक्ष्यामि पाणिनीयं मतं यथा' इत्युक्तेः। पाणिनिमतमाश्रित्य केनचिद् विदुषेयं शिक्षा श्लोकैः प्रणीता। सा च पुनः बहुशाखं गता—ऋक्शाखीया, यजुःशाखीया, अग्निपुराणीयेति। आसु शाखासु पाठान्तराणि पाठवृद्धिश्च लभ्यन्ते; शाखाभेदे पाठवैलक्षण्यं भवत्येवेति सर्वत्र दृश्यते।

**व्याकरणम्**—अग्नौ ३४९ तमाध्यायतः ३५९ अध्यायपर्यन्तमिदं प्रकरणम्। कातन्त्र( कलाप )व्याकरणाश्रितमिदमिति व्यक्तं प्रतीयते। स्कन्देन ( =कुमारेण ) प्रोक्तमिदं कात्यायनायेति उक्तमादौ ( ३४८।२८; ३४९।१ )। कातन्त्र-व्याकरणं कुमारप्रोक्तमिति सांप्रदायिकाः। कुमारप्रसादेन शर्ववर्मणेदं शास्त्रं ग्रथितमिति प्रसिद्धिः ( वृत्तिटीकापरिशिष्टे पृ० ४६९ )। मतमिदं तर्कासहमिति वेदितव्यम्। वस्तुतस्तु कुमाराणामिदं कौमारम्, सुकुमारमतीनां बालानामेवेदं

Siksha. It can not be ascertained whether the author of the other recensions have imitated the indicision of the Agnipurana in this matter or independently had their own confusion ( Translation p. 50 ).

१. Agnipurana does not refer to Panini as the author of the Siksha, though in case of the metrical version of Pingala's prosody, the source has been mentioned. This can well be taken to mean that to the compiler of the Agnipurana the authorship of the Paninian Siksha was not known. But we have seen before that Madhusudana Sarasvati...considers Panini to be the author of the Siksha though the Siksha Prakasha...ascribs the latter work to Pingala. ( Introduction p. 49 ).

व्याकरणमत्युपयोगीति । मतमिदं विस्तरेण प्रत्यपादि श्रीयुधिष्ठिर-मीमांसकेन ( संस्कृतव्याकरणशास्त्र का इतिहास पृ० ५०२ )। यद्यपि प्रकरणमिदं कातन्त्रानुसारि, तथापि पाणिनीयां पद्धतिमपीदमनुसरतीति पाणिनीयप्रत्याहारादिदर्शनादनुमीयते ( ३४९ अ० द्र० ) । गरुडेऽपि कुमारकात्यायनसंवादे व्याकरणं प्रोक्तम् ( १।२०३–२०४ अ० )। एतत् प्रकरणमपि अग्निपुराणोक्तव्याकरणसादृश्यं भजते ।

स्कन्देन व्याकरणमिदं कात्यायनाय प्रोक्तमित्युक्तम् ( ३४९।१ )। कात्यायननामधेयेन विदुषा केचन कातन्त्रभागा निर्मिता इति विज्ञायते, यथोक्तं—"वृक्षादिवदमी रूढाः कृतिना न कृताः कृतः। कात्यायनेन ते सृष्टा विबुद्धप्रतिबुद्धये"। एतद्विषये संस्कृतव्याकरणशास्त्रेतिहासग्रन्थे कातन्त्रप्रकरणं द्रष्टव्यम् ।

एषु अध्यायेषु यादृशी शब्दशास्त्रीया प्रक्रियाऽभिहिता सा न अष्टाध्यायीमनुसरति, प्रत्युत कातन्त्रपद्धतिम् । सन्धि-सुबन्तादिरूपेण यः क्रमोऽत्र दर्शितः, तस्य सर्वप्राचीनमुपदेष्टृ कलापव्याकरणमेवेति इतिवृत्तविदः। किञ्च प्रक्रियासु यानि उदाहरणानि प्रोक्तानि ( तवेदम्, सकलोदकम्, दण्डाग्रम्, सागता, दधीदम् इत्यादीनि ) तानि कातन्त्रवृत्तौ अविकलरूपेण उपलभ्यन्त इति। सुब्विभक्ति-कारकादिषु अपि यानि उदाहरणानि प्रदत्तानि तान्यपि कातन्त्रवृत्तादिषु बहुलं प्राप्यन्ते।

**निरुक्तं कोशश्च**— आग्नेये निरुक्तशास्त्रस्य सारो न दृश्यते, कोशस्य पुनर्दृश्यते ( ३६०–३६७ अ० )। निरुक्तसाम्यात् कोशोऽपि वेदाङ्गविशेष इति कृत्वा कोशप्रकरणमत्र आलोच्यते।

अग्नौ अमरकोशस्यैव सारः कृत इत्यत्र न संशयलेशोऽपि। प्राञ्च आचार्यास्तु स्वसंस्कारानुसारेण 'अमरः खलु अग्निपुराणमनुसृतवान्' इत्यभिदधुः। यथाह भास्कराचार्यः—"केयूरमङ्गदं दोर्भूषेत्यग्निपुराणं तु भुजभूषणत्वेन अनुगमय्य कथनपरम्। तदनुसारित्वाद् अमरसिंहोऽपि तत्पर एवेत्यदोषः" ( ललितासहस्रनामभाष्य पृ० ३५ )। इदमपि प्रतीयते यदग्निपुराणगतकोशेऽपि पाठभेदा आसन्निति। भास्कररायेण 'आदित्यविश्ववसवः...गणदेवताः' इति श्लोकः अग्निपुराणवचनत्वेन उदाहृतः, न स श्लोको मुद्रितेऽग्निपुराणकोशप्रकरणे दृश्यते, अमरकोशे तु पठ्यत एव। अमरकोशसंस्काराद् भास्करस्य प्रमादोऽयमित्यपि संभाव्यते।

अमरः खलु चतुर्थशताब्दीभव इति हरदत्तशर्मा (Introduction to Amarakosa p. 10)। अत्र विदुषां मतानि काणेमहोदयैः प्रदर्शितानि[1], अप्रासंगिकत्वाद् न तानि परीक्ष्यन्ते।

**ज्योतिषम्**—वेदाङ्गज्योतिषविषये कश्चिदपि चर्चा नात्र दृश्यते। शुभाशुभविवेकद-फलित-ज्योतिषविषयिणी चर्चा १२१तमेऽध्यायेऽस्ति। कस्यचिद् महतस्तन्त्रस्यायं सारभूत इति विज्ञायते 'चतुर्लक्षस्य सारम्' इति वचनात् (१२१।१)। १२१।१–१४९।१५ इत्यत्र कालादि-गणना, युद्धजयार्णवीय-नानायोगादिकथनं तान्त्रिकक्रियाश्च वर्णिताः। युद्धजयार्णवप्रकरणं (१२३–१४९ अ०) नूनमेतद्विषयकं कमपि ग्रन्थमाश्रित्य लिखितं तत्सारसंग्रहं कृत्वा। युद्धजयार्णवनामा ग्रन्थो रघुनन्दनेन, स्वरोदयग्रन्थकृता नरपतिना च स्मृतः (द्र० Puranic Records, पृ० १३७ पादटिप्पणी १२८)।

अग्निपुराणीयभुवनकोशान्ते नक्षत्रग्रहादिसंनिवेशविषये लघिष्ठं विवरणं प्रदत्तम् (१२० तमेऽध्याये)। उक्तमत्र—"त्रिनाभिमतिपञ्चारं (?) षण्नेमि द्व्ययनात्मकम्॥ संवत्सरमयं कृत्स्नं कालचक्रं प्रतिष्ठितम्" इति (१२०।२३–२४)। अस्य मूलमृक्संहितायां द्रष्टव्यम् (पञ्चारे चक्रे...१।१६४।१३)।

**कल्पः**—कल्पलक्षणं वायौ अभिहितम्—"मन्त्राणां कल्पनं चैव विधिदृष्टेषु कर्मसु" (५९।१४१) इति। याज्ञिककर्मसु मन्त्राणां विनि-

---

१. Various dates have been assigned to Amarasimha. Prof. Macdonell (History of Sanskrit Literature p. 433) thinks that it is improbable that he flourished about 500 A.D. Max Muller says that the Amarakosa was translated into Chinese in the 6 th century (India : what can it teaches us ? p.232). Dr. Hoernle (J.R.A.S 1906 p. 940) places the Amarakosa between 625 and 940 A. D. rather on shadowy grounds. Mr. Oak places it in the 4th century A.D. (History of Sanskrit Poetics p. 6).

योग[1] एवास्मिन् अङ्के कथ्यते। एतद्दृशा अग्निपुराणप्रोक्तानि चतुर्वेदविधानानि ( २५९–२६२ अ० ) कल्पशास्त्रान्तर्गतान्येव। विष्णुधर्मोत्तरेऽपि एतादृशा अध्याया दृश्यन्ते (२।१२४–१२७)। सामविधानादिब्राह्मणेषु विभिन्नेषु कल्पसूत्रेषु च यादृशा विनियोगाः प्रदर्शितास्तेऽत्र संकलिताः समासतः। मन्त्रसूक्तादिनिर्देशे बहुशो भ्रष्टपाठाः सन्ति, प्रकरणान्तरे पाठविषये विचारयिष्यामः।

क्वचिच्च सूक्तादिविषये विशिष्टा सूचना प्रदत्ता। श्रीसूक्तं च प्रतिवेदमस्तीत्युक्तम्—"श्रीसूक्तं प्रतिवेदं च ज्ञेयम्" ( २६३।१ )। एतदनन्तरं वेदगतानि श्रीसूक्तानि विवृतानि ( २६३।१-३ )। मतमिदं विष्णुधर्मोत्तरेऽपि दृश्यते ( २।१२८।२–६ )। एतेषां मन्त्राणां विषये History of Dharmashastra ग्रन्थो द्रष्टव्यः ( भाग ३, पृ० ७७ )।

**अग्निकृतं वेदवचनव्याख्यानम्**—आग्नेये सन्ति श्लोका ये साक्षादुपनिषद्भ्यो गृहीताः। केचन च उपनिषदर्थमाश्रित्य विरचिताः। सुखावबोधार्थं कानिचन वचनान्युदाह्रियन्ते—

| अग्नि० | उपनिषत् |
|---|---|
| १. द्रष्टव्यस्त्वथ मन्तव्यः श्रोतव्यश्च द्विजातिभिः ( २।७६।३७ ) | आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः ( बृहदारण्यक २।४।५ ) |
| २. सो ( योऽ ) सावादित्यपुरुषः सोसावहमखण्ड ओम् ( ३७७।२४ ) | माध्यन्दिनसंहिता ( ४०।१७ ईशोपनिषच्च ) |

---

१. उक्तमत्र—"आर्षं वै दैवतं छन्दो विनियोगश्च आचरेत्" इति (२६२।२५)। मन्त्राणां ऋषिर्दैवता छन्दश्च विज्ञेयानि मन्त्रजनितकर्मसाफल्यायेति प्राचार्या अपि आहुः—"यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाध्यापयति वा स्थाणुं वर्च्छति गर्तं वा पद्यति..." ( दुर्गनिरुक्तटीकायाम् उद्धृतमिदं ब्राह्मणवाक्यम् )। आर्षेयब्राह्मणारम्भेऽपि एतादृशमेकं वाक्यं विद्यते।

| | |
|---|---|
| ३. य एवमेवं विन्दन्ति ये चारण्यकमाश्रिताः... क्रमात् ते संभवन्त्यर्चिरहः शुक्लं तथोत्तरम्...ततस्तान् पुरुषोऽभ्येत्य मानसो ब्रह्मलौकिकान्... धूमं निशां कृष्णपक्षं दक्षिणायनमेव च... क्रमात् ते संभवन्तीह पुनरेव व्रजन्ति च। ( ३७६।३८–४२ ) | छान्दोग्य५।१०।१–३ द्र० ( उपनिषदि अमानवेति पाठः, आग्नेये तु मानस इति। स चापपाठः )। |
| ४. यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ ( ३७२।३६ ) | श्वेताश्वतरोपनिषत् ( ६।२३ )। |
| ५. प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते ॥ अप्रमत्तेन वेद्धव्यं शरवत् तन्मयो भवेत् ( ३७२।२७–२८ )। | मुण्डक २।२।४ |
| ६. वेदानुवचनं यज्ञा ब्रह्मचर्यं तपो दमः। श्रद्धोपवासः सत्यत्वमात्मनो ज्ञानहेतवः ॥ ( ३७६।३६ ) ( अत्रत्या बहवः श्लोका याज्ञवल्क्यस्मृति-यतिधर्मप्रकरणे लभ्यन्ते )। | बृहदारण्यकम् (४।४।२२) अस्य मूलमिति स्पष्टम् |

**वैदिकधर्मः**—यज्ञादिविषये विशिष्टं लघु च विवरणमुपलभ्यते ( १६६ अ० ); अत्र अष्टचत्वारिंशत्संस्काराणां[1] विवरणमास्ते—गर्भाधानादिविवाहान्तानि चतुर्दश कर्माणि, पञ्च महायज्ञाः, सप्त पाकयज्ञाः, सप्त हविर्यज्ञाः, सप्त सोमसंस्थाः, अष्टौ आत्मगुणाश्च गण्यन्ते (१४+५+७+७+७+८=४८)[2]। गौतमधर्मसूत्रे ( ८।१३–२३ ) एतदनुरूपं मतं दृश्यते।

---

१. संस्कारः = संस्कारो नाम स भवति यस्मिन् जाते पदार्थो भवति योग्यः कस्यचिदर्थस्य ( मीमांसाभाष्य ३।१।३ )। आह शंकराचार्यः—"संस्कारो हि नाम गुणाधानेन वा स्याद् दोषापनयनेन वा" ( शारीरकभाष्य १।१।४ )।

२. संस्काराणां बहुविधा गणना प्रचलति। प्रसिद्धा च षोडशसंस्कारगणना ( याऽग्नेये न प्रतिपादिता ) यत्र गर्भाधान-पुंसवन-सीमन्तोन्नयन-विष्णु-

आग्नेये सन्ध्यागायत्रीविषयौ उक्तौ ( २१५-२१७ )। वर्णाश्रमप्रसंगे प्रायेण सर्वेषु पुराणेषु सन्ध्यादिक्रिया व्याख्याताः। अत्र सन्ध्याविधिर्लघुरुक्तः। नात्र सन्ध्यायां न्यासादिकर्माणि अन्तर्गतानि। अत्र वर्णिता पद्धतिः तैत्तिरीयारण्यकोक्तं सन्ध्याकर्म (२।२) अनुसरति। मानवगृह्यसूत्रं (१।२।१-५ ) शाङ्खायनगृह्यसूत्रं ( २।९।१-३ ) चात्र द्रष्टव्ये।

गायत्रीमन्त्रश्च प्रायः सर्वेषु वेदेषु दृश्यते ( ऋग्० ३।६२।१० अन्यत्र च )। २१६ तमेऽध्यायेऽयं व्याख्यातः। वैष्णवदृष्ट्यनुसारि चेदं व्याख्यानम्। अर्वाचीनबृहत्पराशरादिस्मृतावपि ( चतुर्थोध्यायो द्र० ) एतादृशं व्याख्यानमुपलभ्यते। पाद्मे गायत्रीमन्त्रो व्याख्यातः[1] ( ६।२७२।२०९-२११ )। अत्र 'प्रचोदयात्' इत्यस्य स्थाने 'प्रभाति' इति पदं प्रयुक्तम्।[2]

इदं श्रुतमस्माभिर्यच् श्रीजीवगोस्वामिपादेन अग्निपुराणीयगायत्रीव्याख्यानस्य टीका व्यरचीति ( 'अग्निपुराणीयगायत्र्यर्थभाष्यम्' इत्येव टीकाया नाम )। साऽद्यापि न प्रकाशिता।

## ( ३ ) स्मृतिपुराणेतिहासाः पौराणिकधर्मश्च

स्मृतिं पुराणं स्मृतिपुराणोक्तं धर्मं चाधिकृत्य बहूक्तमाग्नेये। यद्यपि स्मृतिपुराणोक्तो धर्मो वेदमूलकस्तथापि प्रचलितः स्मार्तधर्मो बहुलं तन्त्रमिश्रित इत्यभ्युपेयमेव। अत्र स्मृत्युक्तं पुराणोक्तं च धर्ममेकीकृत्य स्मार्तधर्मपदं व्यवहृतमिति विज्ञेयम्।

वर्णाश्रमादयः स्मार्तधर्मा यद्यपि न पञ्चलक्षणान्तर्गताः, तथापि अर्वाचीने काले एतेषां धर्माणामन्तर्भावः पुराणेषु कृतो लोकसंग्रह-

---

बलि-जातकर्म-नामकरण-निष्क्रमण- अन्नप्राशन - चौल - उपनयन - वेदव्रतचतुष्टय-समावर्तन-विवाहाश्च गण्यन्ते। षोडशविधगणनायामपि मतभेदो दृश्यते।

१. गायत्रीमन्त्रस्य व्याख्यानं गोपथब्राह्मणे ( १।१।३४-३६ ), जैमिनीयोपनिषद्ब्राह्मणे ( ४।२७-२८ ) च दृश्यते।

२. कथं 'प्रचोदयात्' इत्यस्य व्याख्याने 'प्रभाति' इति लडन्तं पदं प्रयुक्तमिति विचार्यम्। प्रचोदयादिति लेट्लकारस्य रूपं' न तु विधिलिङः, ( आग्नेये तु चोदयादित्यस्य व्याख्यानं प्रेरयेद् इति ( २१६।१३ )।

कामनया पुराणप्रवक्तृभिः । अतिप्राचीने काले नायं विषयः पुराणे मुख्यतः प्रतिपादित इति न्यायभाष्यतः प्रतीयते । आह हि वात्स्यायनः- "लोकव्यवहारव्यवस्थापनं धर्मशास्त्रस्य विषयः, लोकवृत्तकथनमितिहासपुराणस्य विषयः" इति ( ४।१।६२ )। वर्णाश्रमादिविधीनामंशतोऽनुप्रवेशो व्यासकृतायां पुराणसंहितायां कृतो व्यासेन, यथाह— "आख्यानैश्चाप्युपाख्यानैर्गाथाभिः कल्पशुद्धिभिः, पुराणसंहितां चक्रे" ( विष्णु० ३।६।१५ )। अत्र कल्पपदेन कर्मकाण्डीयविधिर्गृह्यत इति स्पष्टमेव। स्मार्तधर्मस्य समाजे प्रतिष्ठां दृष्ट्वा सर्वत्र तत्प्रचारकामनया विषयोऽयं पल्लवितः पुराणकारैरित्यनुमीयते[1] । तीर्थादीनां विस्तारो न वैदिकग्रन्थेषु धर्मसूत्रेषु प्राचीनस्मृतिषु च दृश्यते ( यद्यपि भूम्यादीनां पुण्यमयत्वमेषु अभ्युपगतमेव ), पुराणेषु च अतिविशदीकृतास्तीर्थदानव्रतादयो विषयाः। प्रतिष्ठादिषु पुराणाद्युक्तेतिकर्तव्यतैव आश्रयणीयेति शिष्टपरम्परासु प्रसिद्धिः। अतो गम्यते यद् लोकधर्माणामेषामन्तर्भावो यथाकालं पुराणेषु कृत इति। धार्मिकेषु विषयेषु पुराणानां बलिष्ठं प्रामाण्यं न धर्मसूत्रकृद्भिरुक्तम्। धर्मविषये मनुनापि श्रुतिस्मृतिसदाचारात्मतुष्टीनामेव ( २।६ ) प्रामाण्यमुक्तम्। अत्र स्मृतिपदेन मानवादिधर्मशास्त्राणामेव ग्रहणं न पुनर्ब्रह्मादिपुराणानामिति। पुराणश्रवणं तु मनुना विहितमुद्देश्यविशेषसिद्धये "स्वाध्यायं श्रावयेत् ..आख्यानानीतिहासांश्च पुराणानि खिलानि च" ( ३।२३२ ), अतो गम्यते लोकवृत्तादिज्ञानाय पुराणस्य प्रामाण्यं, न तु साक्षाद् धर्मब्रह्मतत्त्वज्ञानाय[2] । धर्मसूत्रादिष्वपि लोकज्ञानाभिवृद्धये पुराणश्रवणं विहितम्। अर्वाचीने काले दार्शनिकविषया अपि पुराणेषु संकलिताः सामान्यतः। यत् श्राद्धादिविवरणं पुराणे संकलितं तदपि सामान्यमेव, कृत्स्नं विवरणं खलु

१. पुरा पुराणे सर्गादयः पञ्चैव विषया आसन्। आख्यानोपाख्यानगाथाकल्पशुद्धयस्तु पुराणतः पृथक् स्थिताः ( वेदेऽन्यत्र च )। आख्यानादीनां लोकोपयोगितां दृष्ट्वा वेदव्यासः पुराणसंहितानिर्माणकाले सर्गादिपञ्चलक्षणैः सह आख्यानादिवाङ्मयमपि संजग्राह। अनेन संहननकर्मणा 'पुराणसंहिता' इति नवीनं नाम जातम् , ततः प्राक् पुराणमित्येव पदं प्रचलितमासीदिति अन्यत्र निरूपितम्।

२. पुराणादीनां सर्गादिकथाप्राधान्याद् इतिहासबहुलत्वेन अर्थवादादिरूपतया...वेदानुग्राहकतया धर्मे प्रामाण्यं न स्वतः ( याज्ञवल्क्य० १।७ गता वीरमित्रोदयटीका )।

सूत्र-स्मृत्योरेव द्रष्टव्यमिति। इदानीं तु पुराणानां सर्वथा प्रामाण्यमपि धर्म्यक्रियासु कासुचिद् अभ्युपगम्यते निबन्धकारैः[१]।

अयं स्मार्तो विषयो यथा पुराणे विभिन्नेषु कालेषु संगृहीतः, आग्नेयेऽपि तथैव। अत्र हाजरामहोदयेन बहु विचारितम्। इदं तस्य विचारफलम्— तीर्थ-श्राद्ध-देवपूजा-वर्णाश्रमधर्म-विवाह-अशौच-शुद्धि-ग्रहयज्ञ-व्रत-तपो-नरक-दान-राजधर्मादयो विषया नवमशताब्द्यामाग्नेये संकलिताः। एषु अपि प्राचीनतमा अंशा सन्तीति विज्ञेयम्। स्नान-अग्न्याधान-मुद्रा-दीक्षा-प्रासादनिर्माण-मूर्तिप्रतिष्ठा-वास्तु-आदयः नवमशताब्दीतोऽपि अर्वाक्काले संगृहीताः। ( Puranic Records p. १८५–१८६ )।

इदमत्र विज्ञेयं यदत्र संकलनकाल एव कथ्यते। इमे विषया मन्वादिस्मृतिभ्यः संकलिताः, अतः स्वरूपत इमे विषयाः प्राचीना एव।

**वर्णाश्रमधर्मः**——अग्नौ वर्णाश्रमधर्मः कार्त्स्न्येनाभिहितः ( १५९–१६२ अ० )। अत्र पुष्करो बभाषे रामाय; रामोऽयं परशुराम इति विष्णुधर्मोत्तरतो विज्ञायते। कोऽयं पुष्कर इति न ज्ञायते। विष्णुधर्मोत्तरे द्वितीयांशे पुष्करप्रोक्तो वर्णाश्रमधर्म उक्तः। उभयत्र शब्दार्थसाम्यम् अवलोकनीयम्। दिङ्मात्रमुदाह्रियते—

अग्नि० १५१ अ० = विष्णुध० २।८०–८१ अ०
,, १५२ अ० = ,, २।८२ अ०
,, १६० अ० = ,, २।१३१ अ०

विष्णुधर्मोत्तरवचसां सारसंकलनमेवाग्नेये कृतमिति प्रतीयते।

अग्नौ पञ्चधा धर्म इत्युक्तम्—"धर्मं वै पञ्चधा स्मृतम्" इति ( १६६।१ )। एतदनन्तरं वर्णधर्माश्रमधर्मादयः प्रपञ्चिताः। मतमिदं परम्परासिद्धम्, यथाह मेधातिथिः—"इह पञ्चप्रकारो धर्म इति विवरणकाराः प्रपञ्चयन्ति" ( २।५ मनुभाष्ये )। अत्र वर्ण-आश्रम-वर्णाश्रम गुण-नैमित्तिकरूपाः पञ्च भेदा उक्ताः।

आग्नेये श्रौतस्मार्तधर्मौ पृथक् निरुक्तौ ( १६६।१;१६६।७ )। श्रौत-

---

१. "एवं प्रतिष्ठायामपि पुराणाद्युक्तैवेतिकर्तव्यता ग्राह्या, नान्या। तेषामेव व्यामिश्रधर्मप्रमाणत्वेन भविष्यत्पुराणे परिज्ञातत्वात्" (अपरार्कटीका पृ० १५)।

धर्मलक्षणं स्मार्तधर्मलक्षणं[1] च विशदीकृतं पुराणान्तरेषु ( वायु० ५९।३१-३२; मत्स्य० १४४।३०-३१ )।

१६३तमेऽध्याये श्राद्धकल्पो विवृतः। पुराणान्तरेष्वपि श्राद्धविवरण-मुपलभ्यते, यथा—ब्रह्म० २२० अ०; विष्णु० ३।१५ अ०; वायु० ८३ अ०; मार्क० २८-२९ अ०; नारदीय० १।२८ अ०; स्कन्द० नागर० २१७; ब्रह्माण्ड० १।१५ अ०; वराह० १४ अ०; कूर्म० २।२१ अ०; मत्स्य० १६ अ० इत्यादि। पुराणोक्तं श्राद्धविवरणं प्रायेण सामान्यं भवति, यथोक्तम्—"इयं सर्वपुराणेषु सामान्या पैतृकी क्रिया" इति ( वराह० १४।५१ )। प्रायेण पुराणगतं श्राद्धविवरणं किमपि सूत्रमनु-सरति – इत्यपि ज्ञेयम्। आह हि—"दृश्यन्ते बहवो भेदा द्विजानां श्राद्धकर्मणि। श्राद्धस्य बहवो भेदाः शाखाभेदैर्व्यवस्थिताः" ( नागर० २१५।२४-२५ )। मन्वादिस्मृत्युक्ता गृह्यसूत्रगताश्च मन्त्राः पुराणगत-श्राद्धप्रक्रियायां स्मृता इति ज्ञेयम्।

११७तमेऽध्यायेऽपि श्राद्धविवरणमस्ति। चतुर्दशमन्वन्तराणां याश्चादिमास्तिथयस्ता अपीह दर्शिताः ( ११७।६१-६४ )। पुराणान्तरे-ष्वपि इमास्तिथयः स्मृताः ( मत्स्य० १७।६-८; पद्म० ५।९। १३२-१३५ )।

सप्तव्याधविषयकाः श्लोकाः ११७।५६-५७ इत्यत्र सन्ति। हरि-वंशेऽपि प्रकरणमिदमस्ति ( १।२४।२०-२१ )। एतत्सम्बद्धा कथा मत्स्ये ( २०-२१ अ० ) हरिवंशे ( १।२१-२४ अ० ) च दृश्यते।

ग्रहयज्ञः खलु १६४तमाध्याये विवृतः। अयमेव ग्रहशान्तिरिति। अग्निगतं विवरणं याज्ञवल्क्यस्मृत्यनुगतमिति दृश्यते ( १।२९५-३०८ )। पुराणान्तरेष्वपि ग्रहयज्ञो विवृतः ( मत्स्य० ९३ अ० )। क्वचिद् गृह्य-सूत्रेऽपि ग्रहयज्ञो विहितः ( दृश्यतां बौधायनगृह्यशेषसूत्रम् १।१६ )।

प्रायश्चित्तमत्र प्रोक्तम् ( १६९-१७४ अ० )। प्रायश्चित्तेन सह महापातकोपपातकानां विवरणमपि दीयते प्रायेण—वराहे ( १३१-१३६ अ० ), कूर्मे ( २।३०-३४ अ० ), गरुडे ( १।५२ ), ब्रह्माण्डे ( २।८ अ० ) विष्णुधर्मोत्तरे ( २।७३ अ०; ३।२३४-२३७ ) च।

---

१. लक्षणमिदं विशदीकृतं माधवेन—"अग्न्याधातादिपूर्वकोऽधीतप्रत्यक्ष-वेदमूलो दर्शपूर्णमासादिः श्रौतः। अनुमितपरोक्षशाखामूलः शौचाचमनादिः स्मार्तः" ( पराशरमाधव, भाग १, पृ० ६४ )।

१७५तमाध्यायमारभ्य बहुषु अध्यायेषु व्रतानि विवृतानि। विषयोऽयं न मन्वादिप्राचीनस्मृतिषु गृह्यधर्मसूत्रेषु वा प्रतिपादितो मुख्यतः। क्वचिदेव गौणनिर्देशोऽवलोक्यते। खीष्टीयप्रथमद्वितीयतृतीयशताब्दीषु जैनबौद्धधर्मौ प्रबलौ अभूतां वैदिककर्मकाण्डविरोधिनौ। एतद्धर्मे जनानां प्रवेशो मा भूदिति चिन्तयद्भिर्वैदिकधर्मानुयायिभिः विद्वद्भिः व्रतादिरूपः सरलो धर्ममार्गश्चिन्तितः। व्रतादिषु लोकधर्माणामन्तर्भावोऽपि बहुधा कृत इत्यभ्युपेयम्[१]। व्रतविचारेण[२] सह कालतिथ्यादीनां विचारोऽपि आस्ते।

व्रतप्रकरणं पुराणान्तरेष्वपि दृश्यते– मत्स्य० ५४–९२ अ०; पद्म० ५।२०–४२अ०; वराह० ३९-६५; अन्यत्र च।

दानमाग्नेये ( २०८–२१३ अध्यायेषु ) विवृतम्। अर्वाचीनकाले ये मुख्या विषयाः पुराणे संकलिताः, तेषु इदमन्यतममिति विज्ञायते। दानेन सह महादानान्यपि विवृतानि। मेरुदान–धेनुदानादयोऽपि विवृता यथास्थानम्। तैत्तिरीयब्राह्मण-(२।३) गतेषु प्रतिग्रहमन्त्रेषु महादानक्रिया

---

१. उक्तं च काणेमहोदयेन—"In the Grihya and Dharmasutras and in ancient Smritis like those of Manu and Yajnavalkya what were called Vratas in the Puranas did not occupy any very prominent position. During the early centuries of Christian era Buddhism and Jainism were influencial rivals of ancient sacrificial system. In order to wean away common people from the two schisms it is very probable that learned followers of the Vedic system hit upon the glorification of Vratas..... and also adopted some of the practices of common folks as Vratas ( H. Dh. S. Vol. V. p. 43 ).

२. द्र० History of Dharmasastra, ( भाग ५, पृ० २५१–४६२ )। अत्र सर्वाणि व्रतानि वर्णक्रमानुसारेण स्थापितानि विवृतानि च।

बीजरूपेण लक्ष्यत इति गवेषकाणां मतम् । तैत्तिरीयारण्यकेऽपि सप्तदश दानानि कथितानि इति[१] दृश्यते ।

पुराणान्तरेऽपि दानप्रकरणमास्ते—लिङ्ग० २।२८-४४अ०; मत्स्य० २७४-२८९ अ०, ८२ अ०; वराह० ९९-११०; दानानि खलु भारतीयवैभवं ज्ञापयन्ति, यथोक्तं वासुदेवशरणमहोदयेन—"It was in this background of universal prosperity and opulence during the golden age of Indian History that an idea of the 16 Mahadanas was formulated as an actual fact of social and religious life.[२]

पौराणिकस्मार्तधर्मप्रसंगे स्वर्गनरकविवरणमपि आलोच्यं भवति । स्वर्गविषये सामान्यत उक्तं भुवनकोशे । नरकास्तु २०३तमाध्याये ३७१तमाध्याये च विवृताः । प्रायश्चित्तदुःखादिप्रसङ्गेऽपि क्वचित् नरकवर्णनमुपलभ्यते पुराणे । पुराणेषु नरकवर्णनम्—ब्रह्म० २२ अ०; विष्णु० २।६ अ०; पद्म० उत्तर० २२७ अ०; भविष्य० ब्रह्म० १९२ अ०; ब्र० वै० २।२९ अ०; नारदीय० १।१५ अ०; मार्क० १२ अ०; नागर० २२६-२२७ अ० ।

व्यवहारश्चाग्नेये विस्तरेणोक्तः ( २५३-२५८ अ० ) । इदं प्रतीयते यदत्र प्रकरणे याज्ञवल्क्यस्मृतिगतश्लोका एव संक्षेपेणोक्ताः । क्वचिच्च नारदीया स्मृतिरपि अनुसृता शब्दतः[3] । गरुडेऽपि ( १।९३-१०६ अ० ) व्यवहारप्रकरणमस्ति ।

---

१. दीक्षितारमहोदयो वक्ति—"There is the question of 16 Mahadanas, which a monarch is asked to perform on peculiar occasions. This institution can be traced back to the Pratigrahamantra Section of the Taittiriya Brahmana ii. 3. The Taittiriya Aranyaka furnishes a list of 17 Danas of which some of the gifts are referred to in the Puranas ( Matsya Purana—A Study p. 95-96 ).

२. Matsyapurana—A Study pp. 379-380.

३. Almost the whole of the Vyavahara section

धर्मशास्त्रगता बहवो मुख्या अवान्तराश्च विषया अशौचादयोऽत्र यथास्थानं वर्णिताः, त इह उपेक्षिताः ।

**पुराणानि**—२७१।११-१२ इत्यत्र मूलपुराणसंहितायाः प्रणयनमुक्तम् । व्यासशिष्यः सूतः पुराणसंहितां जग्रन्थ, सुमत्यादीन् षट् शिष्यानुपदिदेश च । षट्सु शिष्येषु मध्ये शांशपायनादयः मूलपुराणसंहितामाश्रित्य पुराणसंहिताश्चक्रुः । विवरणमिदं वायौ (६१।५५-६१) ब्रह्माण्डे (१।३५।६३-६९) वैष्णवे (३।६।१७-१९) च यथास्वं दृश्यते । यद्यपि आग्नेये पुराणसंहिताप्रणेतॄणां नामानि नोक्तानि, तथापि वाय्वादिसंवादत इदं गम्यते यच् शांशपायनः, सावर्णिः, अकृतव्रणो लोमहर्षणश्च पुराणसंहिताकाराः । (आग्नेये 'कृतव्रणोऽथ' इति पठ्यते, सम्यक् पाठस्तु 'अकृतव्रण' इत्येव) । अयम् अकृतव्रण एव काश्यपः, यथाह श्रीधरः—"अकृतव्रण एव काश्यपः, काश्यपोऽप्यकृतव्रण इति वायुनोक्तेः" (विष्णु० ३।६।१९ टीका) । स्मृता च काश्यपीया पुराणसंहिता सरस्वतीकण्ठाभरण-हृदयहारिणीवृत्तौ (४।३।२२९) चान्द्र-व्याकरणे च (३।३।७१) । सूतकृता पुराणसंहिता १५०।३१ इत्यत्र अपि निर्दिष्टा ।

२७२तमेऽध्याये पुराणदानमुक्तम् । विषयोऽयं मात्स्येऽपि दृश्यते (५३ अ०) । अस्मिन्नध्याये पुराणानां श्लोकपरिमाणमुक्तम् । प्रायेण सर्वेषु पुराणेषु विषयोऽयं दृश्यते ।

पुराणपरिमाणे मतभेदा अवलोक्यन्ते । विषयोऽयं श्रीधरादिभिः पूर्वाचार्यैरप्यवलोकितम्, स्वदृष्ट्या समाधानं च कृतम्—"विष्णुपुराणं च कचिद्दशसाहस्रम् , कचिदष्टसाहस्रम् इत्यादिविकल्पेऽपि अत्र षट्साहस्रमेव व्याख्यायते" (३।६।२६) । मित्रमिश्रोऽप्याह—"मत्स्यपुराणे तु भागवतीयगणनातः षट्शत्याऽग्निपुराणं, द्विशत्या च ब्रह्माण्डपुराणम् अधिकमुक्त्वा अन्ते चतुर्लक्षमित्युपसंहृतम् , तददूरविप्रकर्षेण । भवन्ति हि ईदृशा अपि वादा यत् किञ्चिन् न्यूनाधिकं शतं लब्ध्वा शतं मया लब्ध-

---

in Yajnyavalkyasmriti occurs in chapters 253–258 of the Agnipurana and many verses of chapter 253 are identical with verses of the Naradasmriti ( H. Dh. S. vol. I. p. 162 ).

मिति, एवं भागवतीयमपि चतुर्लक्षवचनं व्याख्येयम्। यापि विष्णु-पुराणे ब्रह्माण्डमादाय वायवीयत्यागेन, या च ब्रह्मवैवर्ते वायवीय-मुपादाय ब्रह्माण्डपुराणपरित्यागेन अष्टादशसंख्योक्ता, सा कल्पभेदेन व्यवस्थापनीया" इति ( परिभाषाप्रकाश पृ० १२–१३ )।

**अग्निपुराणोक्तं भारतम्**—भारतग्रन्थस्य सारसंक्षेपः १३।१–१५।१५ इत्यत्र दृश्यते। कृष्णमाहात्म्यलक्षणोऽयं ग्रन्थ इत्यप्यत्रैवोक्तम्। गरुडपुराणेऽपि 'भारतं संप्रवक्ष्यामि' इत्युक्त्वा भारतसारो दत्तः ( १४५।१ )।

अत्र भारतेति शब्देन भरतवंशीयानां कौरव-पाण्डवानां मूलमिति-वृत्तं गृह्यते। भारतग्रन्थस्वरूपमुक्तं पूर्वाचार्यैः—

चतुर्विंशतिसाहस्रीं चक्रे भारतसंहिताम्।
उपाख्यानैर्विना तावद् भारतं प्रोच्यते बुधैः।
( आदिपर्व १।१०२–१०३ )।

इदं प्रतीयते यद् अस्य भारतग्रन्थस्य सारः केनचित् पूर्वसूरिणा कृतः, परम्परायां च स प्रचलित आसीत्। एतत्सारमाश्रित्य गरुडाग्नि-पुराणगतं विवरणं केनचित् पुराणकारेण कृतमिति। पुराणवर्णिते भारते कुरुपाण्डववैरमेव प्रधानतो वर्णितम् इति विज्ञेयम्।

भारतं महाभारतं ( भारतस्योपबृंहितं रूपम् ) च पुरा पृथक् प्रचलिते आस्तामिति ज्ञायते। अतएव शौनकगृह्यसूत्रे तर्पणप्रकरणे 'भारतमहाभारतधर्माचार्याः' इति प्रयोगो दृश्यते। अष्टाध्याय्याः ६।३।३८ सूत्रतोऽपि ज्ञायते यदिमौ ग्रन्थौ पाणिनिना विज्ञाताविति[१]। महाभारतमीमांसानामधेये हिन्दीग्रन्थे विषयोऽयं बहुधा चर्चितो यथास्थानम्।

---

१. एतद्विषये सुकथनकरकृतो निबन्धः ( The Bhrigus and the Bharata ) द्रष्टव्यः ( A. B.O. R. I. vol. xviii pp.15–75 ); श्रीउतगीकरकृतः Mahabharata in the Asvalayana Grihya Sutra नामा निबन्धोऽपि द्रष्टव्यः ( Proceedings of the First Oriental Conference, vol. II. p. 60 ).

भारतग्रन्थस्य भारतवाचकस्य च पूजा २७२।२३-२६ इत्यत्र युक्ता। ६३।२५-२६ स्थलेऽपि भारतग्रन्थदाता प्रशंसितः।

**गीता**—आग्नेये गीताप्रसंगो दृश्यते। कृष्णकृतो गीतोपदेशः १४।२-३ इत्यत्रोक्तः। गीतासारश्च ३८१।१-५८ इत्यत्र दृश्यते। गारुडेऽपि एतादृशो गीतासारो विद्यते ( १।२२९ अ० )। अत्र सर्वे श्लोका गीतात एव संकलिताः।

**यमगीता** ( कठोपनिषद्गतोपदेशसारभूता ) — ३८२।१-३७ इत्यत्रोक्ता। बहवश्च गीता इतिहासपुराणे प्राप्यन्ते[1]—इति विज्ञेयम्। यमगीतायां विशिष्टा सूचना उपलभ्यते—श्रेयोविषये कपिलपञ्चशिखादीनां मतान्यत्र संकलितानि ( ३८२।३-१७ )। एतद्विषये दर्शनप्रकरणे विचारयिष्यते। किं श्रेय इति विचारितं काठके—"श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ संपरीत्य विविनक्ति धीरः" इत्यादिभिः श्लोकैः। परमश्रेय एव सांख्ये निरूपितम्, अतएव "तद्विपरीतः श्रेयान् व्यक्ताव्यक्तज्ञविज्ञानात्" इत्युक्तं सांख्यकारिकायाम् (प्रथमा कारिका)। ३८२।३-१० श्लोकेषु 'गीतं प्रगीतकमुद्गीतम् गीयते' इत्येव पदानि प्रयुक्तानि आचार्यनामभिः सह; एतेन ज्ञायते एतेषामाचार्याणां मतानि वचांसि वा विज्ञाय इमे तन्मतख्यापनपराः श्लोकाः प्रणीता इति।

अध्यायान्तरेष्वपि गीताश्लोका दृश्यन्ते—३७३तमेऽध्याये आसनप्रसङ्गे बहूनि गीतावचनानि संकलितानि। गीतवचनवद् वचनानि सर्वेषु पुराणेषूपलभ्यन्ते। गीतामाहात्म्यं च पाद्मोत्तरखण्डे पठ्यते।

**अग्निपुराणोक्तं हरिवंशम्**—द्वादशेऽध्याये 'हरिवंशं प्रवक्ष्यामि' इत्युक्त्वा यादववंशे जातस्य वसुदेवपुत्रस्य कृष्णस्य चरितानि उक्तानि। बलभद्रस्य कृष्णपुत्राणां च चरितान्यप्युक्तानि।

विवरणमिदं हरिवंशीय-विष्णुपर्वोक्तं कृष्णचरितसारभूतमिति प्रतिभाति।

---

१. अवधूतगीता, अष्टावक्रगीता, उत्तरगीता, ईश्वरगीता, गणेशगीता, देवीगीता, ब्रह्मगीता, व्यासगीता, रामगीता, शिवगीता, सूर्यगीता च। शान्तिपर्वणि बह्व्यो गीताः—मङ्कि-पिङ्गल-शम्पाक-हारीत-वृत्र-पराशर-हंसगीताः।

कथमत्र हरिवंशगते प्रथम-तृतीय-पर्वणी नाधिकृते – इति चिन्तनीयं विद्वद्भिः। किम् अग्निपुराणकारः स्वेच्छया कृष्णचरितवर्णनपरायणस्यांशस्यैव सारं कृतवान्—विहाय पर्वद्वयम्, आहोस्विद् तत्परम्पराप्रचलिते हरिवंशे द्वितीयपर्वणः सत्तैवासीद् नान्यस्य पर्वद्वयस्य इति[1] ?

उक्तमत्र—"अनिरुद्धात्मजो वज्रो मार्कण्डेयात् तु सर्ववित्" इति (१२।५४)। इदं पुराणान्तरतोऽपि सिध्यति। विष्णुधर्मोत्तरे मार्कण्डेय-वज्रसंवादे बहवो विद्या उक्ताः (द्वितीयभागे)।

**रामायणम्**—पञ्चमाध्यायत एकादशाध्यायपर्यन्तमिदं प्रकरणम्। आदावेव "नारदेनोदितं वाल्मीकये" (५।१), अन्ते च "वाल्मीकिर्नारदाच्छ्रुत्वा रामायणमकारयत्। सविस्तरं" (११।१४) उक्तम्। अत्र रामायणोक्तं रामचरितमेव मुख्यत उक्तम्[2]।

रामायणस्य सारः, रामायणगतसीतादीनां चरितानि च पुराणेषु अन्तराऽन्तरा दृश्यन्ते[3]—

---

१. हरिवंशे प्रक्षिप्तभागाः सन्तीति विद्वद्भिर्निर्णीतम्। प्रथमपर्वणि १–२६ अध्यायाः प्रक्षिप्ता इति नरसिंहस्वामिना दर्शितम् (J. V. O. 1. Vol. VI. p. 70)।

२. पुराणेषु वाल्मीकिचरितमपि दृश्यते—अवन्ती० २४ अ०; वैशाखमास० २१ अ०। वाल्मीकिरन्ये च ऋषयो रामचरितं प्रणिन्युरिति पुराण उक्तम् (भाग० ६।१०।३)।

३. गरुड० १।१४२–१४३ अ०; कूर्म० १।२१।१५–५६; २।३४।११०—१४१ (सीतामाहात्म्यम्) वराह० ४५ अ०; १६३ अ०; ब्र० वै० २।१४ अ०; ४।२७।१५३–१६६; ४।६२ अ०; ४।११६ अ०; ४।६।१७१–१७३; विष्णु० ४।४ अ०; भाग० २।७।२३–२५; ६।१०–११ अ०; ११।४।२१; ६।१३।१८; ब्रह्म० ८४ अ०; ६७ अ०; १२३ अ०; १४३ अ०; १५४ अ०; १५७ अ०; १७६ अ०; २१३ अ०; १७० अ०; १७६।१५–५०; १८०।३२–३३; वायु० ७०।४१–५१; ८८।१८३–१९७; वेंकटाचल० ५ अ०; ३६–४० अ०; अयोध्या० ४ अ०; ६–८ अ०; अवन्ती० २१ अ०; चतुरशीतिलिङ्ग० ७६ अ०; रेवा० ३५ अ०; १६८ अ०; नागर० ६६–१०४ अ०; प्रभासक्षेत्र० १६।७५–७६; ५८ अ०; १११ अ०; १२३ अ०; केदार० ८ अ०; मत्स्य० ५३।७०–७१; १२।४८–५१; लिङ्ग० १।६६।३४–३८ अ०।

मूलरामायणपदं पुराणे दृश्यते ( १।१।३ ब्रह्मसूत्रमध्वभाष्यधृतं स्कन्दवचनं द्र० ) । एतन्मूलरामायणं किंविधमिति चिन्तनीयम् । किमध्यात्मरामायणादिवर्जनाय मूलेतिशब्दः प्रयुक्तो येन वाल्मीकिकृत-रामायणमेव गृह्येत ?

**धर्मशास्त्राणि**—आग्नेये धर्मशास्त्रकाराणां नामान्युक्तानि ( १६२। १-२ ) । धर्मशास्त्रकारनामानि ग्रन्थान्तरेष्वप्युक्तानि—पराशरस्मृतौ ( १।१२-१४ ) याज्ञवल्क्यस्मृतौ ( १।४-५ ) च । अपरार्के ३६ स्मृतय उक्ताः ( पृ० ७ ) । षट्त्रिंशद्गणना प्रसिद्धासीदिति विज्ञायते—"मन्वादिस्मृतयो यास्तु षट्त्रिंशत् परिकीर्तिताः" इति भविष्यत्पुराण-वचनात् । एतद्विषये पैठीनसिवचनं ( स्मृतिचन्द्रिकासंस्कारमयूख-वीरमित्रोदयादिषु धृतं ) द्रष्टव्यम् । एवं अष्टादशस्मृतिकारेत्यादिगणना अपि संप्रदाये प्रसिद्धाः ।

स्मृतिविषये विशिष्टो विचारः १६६तमाध्याये कृतः । आग्नेये एतद् विषयकः पाठो भ्रष्ट इति भाति । दृष्टिरियं भविष्यत्पुराणे सम्यक्तया प्रतिपादिता—

पञ्चप्रकाराः स्मृतय एवं शिष्टव्यवस्थिताः ।
त्रिधा चतुर्धा द्वेधा वा एकधा बहुधा खग ॥
दृष्टार्था तु स्मृतिः काचिद् अदृष्टार्था तथाऽपरा ।
दृष्टाऽदृष्टार्थरूपान्या न्यायमूला तथा परा ॥
अनुवादस्मृतिस्त्वन्या शिष्टैर्दृष्टा तु पञ्चमी ।
सर्वा एता वेदमूला दृष्टार्था परिहृत्य तु ॥
षाड्गुण्यस्य प्रयोज्यस्य प्रयोगः कार्यगौरवात् ।
सामादीनामुपायानां योगो व्याससमासतः ॥
अध्यक्षाणां च निक्षेपः कण्टकानां निरूपणम् ।
दृष्टार्थेयं स्मृतिः प्रोक्ता ऋषिभिर्ज्ञानकोविदैः ॥
सन्ध्योपास्या सदा कार्या शुनो मांसं न भक्षयेत् ।
अदृष्टार्था स्मृतिः प्रोक्ता ऋषिभिर्गरुडाग्रज ॥
पालाशं धारयेद् दण्डमुभयार्थां विदुर्बुधाः ।
विरोधे तु विकल्पः स्याज् जपहोमश्रुतौ यथा ॥

श्रुतौ दृष्टं यथा कार्यं स्मृतौ तत् तादृशं यदि ।
उक्तानुवादिनी सा तु पारिव्राज्यं यथा गृहात् ।।
( ब्राह्मपर्व १८१।२३-३० ) ।

## ( ४ ) तन्त्रम्, तान्त्रिकधर्मश्च

पुराणेषु स्मार्तधर्मवत् तान्त्रिककर्माण्यपि बहुलमुक्तानि । आगमेन तन्त्राख्येन प्रतिपादितेन धर्मेण सह वैदिकधर्मस्य मिश्रीभावमभिलक्ष्य 'निगमागमधर्म'-शब्दं प्रयुञ्जते शिष्टाः । निगमस्यागमस्य च स्वरूपादिकं भिन्नदृशा प्रतिपादितं तन्त्राधिकारिनिर्णयग्रन्थे आगमप्रामाण्यग्रन्थे च । एतद्विषये नास्माभिरालोच्यते किमपि । तन्त्राणि च वेदाश्चेत्येतद्द्वयं मूलतः पृथक्, यथाकालं चानयोर्मिश्रणमभूदित्येव आधुनिका विद्वांसः[१] ।

पुराणे तन्त्रस्य कीदृशी स्थितिरित्यस्मिन् विषये पुराणमतानि उपस्थाप्यन्ते समासतः। मतभेदानां किं कारणमिति नात्र विचार्यते । ऐतिहासिककारणैर्मतानि भिद्यन्ते—इत्येवात्राभ्युपेयम् ।

अथात्र निगमागमसंबन्धविषये मतान्युपस्थाप्यन्ते—(क) आगमः निगमात् प्राचीनमिति । एतौ परस्परमिलितौ च[२] । ( ख ) वेदानधिकारिणां पतितानामज्ञानां वा कृते पाञ्चरात्राद्यागमा इति[३] । ( ग ) यश्चांशः तन्त्रेषु वेदविरुद्धः स एव त्याज्यः, अन्यश्चांशश्च ग्राह्य इति[४] । ( घ ) निगमागमोक्तयोर्मार्गयोरन्यतरो मार्ग आश्रयणीयो यथारुचि ।

---

१. आग्नेये तान्त्रिकी रीतिः वेदतः पृथक्कृत्य स्पष्टं लक्षिता—"वैदिकस्तान्त्रिको मिश्रो विष्णोर्वै त्रिविधो मखः" ( ३७२।३४ )। अत्र मिश्रपदेन निगमागमात्मको धर्मो लक्षितः । यद्यपि तन्त्राणि न श्रुतिरिति वैदिका अभिमन्यन्ते तथापि धर्मसूत्रकृद् हारीतस्तन्त्राण्यपि श्रुतौ परिगणितवान् । यदाह — "अथातो धर्मं व्याख्यास्यामः । श्रुतिप्रमाणको धर्मः । श्रुतिश्च द्विविधा-वैदिकी तान्त्रिकी च" इति ( २।१ मन्वर्थमुक्तावलीधृतं वाक्यम् ) ।

२. बृहद्धर्म० मध्यमखण्ड ५।१३८ ।

३. देवीभाग० ७।३६।२७–३२; वराह० ६६।११ ।

४. देवीभाग० ७।३६।१८ ।

नानयोः श्रैष्ठ्यमश्रैष्ठ्यं वा इति[१]। (ङ) कलौ आगमधारायाः प्राबल्यम्। क्वचिच्चेदमप्युक्तं यत् सत्यादिचतुर्षु युगेषु वेद-स्मृति-पुराण-तन्त्राणां यथाक्रमं प्राबल्यमिति[२]। प्रायेण पुराणेषु मोहनशास्त्ररूपेणागमानां निर्देशः कृत इति ज्ञेयम्।

हाजरामहोदयेन ऐतिहासिकदृष्ट्या अत्र बहु विचारितम्[३]। तेनेदं प्रतिपादितं यत् सन्ति पुराणे पूजाविधयो येषु लेशतोऽपि तन्त्रगन्धो नास्ति। एते चांशा अष्टमशताब्दीतः प्राचीनाः। आदौ विशिष्टा मुद्रान्यासादय एव पुराणेषु संकलिताः, ततश्च कृत्स्नस्य तन्त्रस्य प्रामाण्यमभ्युपगतं पुराणे। एतदनन्तरं तान्त्रिककर्मादीनि स्मार्तकर्मभिः सहोक्तान्यविशेषेण।

दशमैकादशशताब्द्योः तन्त्रप्रतिष्ठा सुमहती जाता। गरुडाग्निपुराणगतं तान्त्रिककर्मविवरणमस्योदाहरणम्। प्रायेण पूजाविधिषु तान्त्रिकमन्त्रा इहोल्लिखिताः।

तन्त्रप्रभावविषये इमे ग्रन्था आलोच्याः—साधनमालाभूमिका (गायकवाडसीरीज); Indian Historical Quarterly, vol. vi. p. 114; vol. ix. p.678; vol. x. pp. 486–492; Introduction to Sanskrit Texts from Bali ( Sylvain Levi ); Modern Review, Aug. 1934 pp. 150–156 ( Hist. Dh. S. vol. ii. p. 319 Foot Note ).

आग्नेये पञ्चरात्रविषयिणी विशिष्टा सूचना प्रदत्ता—

प्रोक्तानि पञ्चरात्राणि सप्तरात्राणि वै मया॥
व्यस्तानि मुनिभिर्लोके पञ्चविंशतिसंख्यया॥

(३९।१–२)।

एवमुक्त्वा पञ्चविंशतिः तन्त्राणि—हयशीर्ष-त्रैलोक्यमोहन-

---

१. वराह० २११।६२; देवीभाग० ७।३६।३–५; १२।७।५; भाग० ११।५।२८।

२. वराह० ७०।२४–२५; पद्म ६।५३।४–५; ६।५३।२६–२७।

३. द्र० Puranic Records ग्रन्थस्य पञ्चमोऽध्यायः ( Absorption of Tantricism by thd Puranic Rites ane Customs नामधेयः )।

वैभव-पौष्कर-प्रह्लाद-गार्ग्य-गालव-नारदीय-श्रीप्रश्न-शाण्डिल्य-ईश्वर-सत्य-शौनक-वासिष्ठ-स्वायंभुव-कापिल-तार्क्ष्य-नारायणीय-आत्रेय-नारसिंह-आनन्द-आरुण-बौधायन-अष्टाङ्ग-विश्वनामधेयानि कण्ठत उक्तानि। ब्रह्मवैवर्तेऽपि "पञ्चरात्राणि पञ्च च" इत्युक्तम् (४।९०।४) पाञ्चरात्रसाहित्यविषये श्रेदरकृतः Introduction to the Pancharatra and the Ahirbudhnya Samhita ग्रन्थः (पृ० २-२६) द्रष्टव्यः।

उपर्युक्तेषु तन्त्रेषु मध्ये कानिचन प्रचलन्त्यपि। नारदपञ्चरात्रं तु प्रकाशितम्। सटीकमिदं तन्त्रमुपलभ्यते। श्रेदरमहोदयेन Introduction ग्रन्थे तन्त्रनामानि गणितानि (६-११) पाञ्चरात्रदर्शनविषये दर्शनप्रघट्टके आलोचयिष्यते।

आग्नेये पूजादिषु पाञ्चरात्रदृष्टिः सुष्ठु प्रपञ्चिता, अतएव पुराणमिदं पाञ्चरात्रसंप्रदाय एवादौ प्रोक्तमित्यनुमीयते विद्वद्भिः[1]। शैवानां शाक्तानां च प्रभावोऽत्र पुराणे न परिदृश्यत इति विज्ञेयम्।

**तान्त्रिककर्माणि**—आग्नेये २४तमेऽध्याये अग्निकार्यम्, होमादीनि च विवृतानि। कृष्णानन्दकृते तन्त्रसारे विषयोऽयमुलभ्यते। कुण्डनिर्माणादिविषये कुण्डार्कनामा ग्रन्थो द्रष्टव्यः। सर्वतोभद्रादीनि मण्डलानि २९-३० अध्याययोः सन्ति। तन्त्रसारेऽपि मण्डलानि विवृतानि।

आग्नेये ५७-५९ अध्यायेषु न्यासो वर्णितः। गारुडेऽपि (१।३५-३७ अ०) न्यासो विवृतः। अस्यावैदिकत्वं संस्कारमालायामुक्तम् (पृ० २२२९)। मातृकान्यासादयो बहवो न्यासास्तन्त्रसारे व्याख्याताः।

आग्नेये त्वरितापूजादयो वर्णिताः (१४७ अ०, अन्यत्र च)। तन्त्रसारे त्वरिताप्रयोगः त्वरितायन्त्रधारणं च विवृतम्।

---

१. The present Agni is originally a work of the Pancaratras. It proposes to deal with Brahman which is identified with Visnu ( Puranic Records p. 139 ).

आग्नेये २१तमाध्यायतः १०६तमाध्यायपर्यन्ता ये पूजादयो वर्णिताः, तेषु पाञ्चरात्रधर्मप्रभाव उपलक्ष्यत इति हाजरामहोदयस्य मतम् ( Puranic Records पृ० १३६ )। अतिविस्तृतमिदं प्रकरणं पश्चादाग्नेये संयोजितमिति व्यक्तमेव; यतो हि २०।२३तमे श्लोके विषयस्यास्य प्रस्तावनाऽभिहिता ( ऋषिभ्यो नारदाद्युक्ता पूजाः...... ) श्लोकोऽयं सर्वथा पूर्वसंबन्धहीनः, अतो गम्यते यदिमे अध्यायाः पश्चात् संकलिता इति। ७१तमाध्याये वक्तृ-श्रोतृ-नामनी भिद्येते। इदं प्रतीयते यत् ७१तमाध्यायतो यो विषय उक्तः स पूर्वविषयतोऽप्यर्वाचीन इति।

२६तमाध्याये मुद्रा वर्णिता। मुद्राश्च तान्त्रिक्य इति। स्मृतिचन्द्रिकायां ( भाग १ पृ० १४६–१४८ ), स्मृतिमुक्ताफले ( आह्निक० पृ० ३३१–३३२ ), पूजाप्रकाशे ( पृ० १२३–१२६ ) च मुद्रालक्षणानि विचारितानि।

तान्त्रिक्यो दीक्षा अपि बहुत्र प्रोक्ताः समयदीक्षा-निर्वाणदीक्षादयः। तन्त्रसारग्रन्थारम्भे दीक्षा प्रपञ्चिता। निर्वाणदीक्षाप्रसंगे अष्टचत्वारिंशत् संस्कारा अभिहिताः ( ३२ अ० )। तान्त्रिककर्मभिः सह स्मार्तधर्मस्य सहावस्थानरूपः संबन्धोऽनेन व्यज्यते।

आग्नेये यद् युद्धजयार्णवप्रकरणमस्ति, तत् तान्त्रिककर्मविशेषम् इति विज्ञेयम्। फलितज्योतिषेण सह इदम् अंशतः संबद्धमपि। अत्र ये चक्र-योगादयो वर्णिताः, ततो युद्धजयार्णवस्वरूपं विज्ञायते।

षट्कर्मप्रतिपादनमपि दृश्यते (१३८–१४१ अ०)। अत्र शान्त्यादीनि कर्माण्येव गृह्यन्ते, यथाहुः—"शान्तिवश्य-स्तम्भनादि-विद्वेषोच्चाटने ततः। मारणान्तानि शंसन्ति षट्कर्माणि मनीषिणः" इति। अन्यान्यपि प्रकीर्णानि तान्त्रिककर्माण्युक्तानि, तानीह उपेक्षितानि।

## ( ५ ) दर्शनशास्त्राणि दर्शनसंप्रदायाश्च

योगवेदान्तादिसंबद्धा अपि केचनाध्याया आग्नेये सन्ति। भक्तिः, कर्म, ज्ञानं चापि यथाप्रसंगं विवृतानि।

यच्च सृष्टिप्रकरणमाग्नेये दृश्यते, तन्मूलतः सांख्यानुमोदितमिति विज्ञेयमेव[1]। सांख्यीया प्रक्रिया सांप्रदायिकदृष्ट्या क्वचित् क्वचित् परिवर्तितेति अस्माकं मतम्।

दर्शनग्रन्थेषु अग्निवाक्यानि उद्धृतानीति प्रागावेदितम्।

अग्नौ अष्टाङ्गयोगस्य सुष्ठु प्रतिपादनं दृश्यते ( ३७२-३७६ अ० )। इदं प्रायेण पातञ्जलयोगानुसारीति प्रत्यक्षमेव। अत्र ध्यानं धारणातः प्राक् प्रपञ्चितमिति दृश्यते। योगाभ्यासदृष्ट्या नेदं भवितुमर्हतीति। इदं प्रतीयते यदत्र अध्याययोर्व्यत्यासः समजनि। यतिधर्मप्रसंगेऽपि योगमहत्ता कीर्तिता।

पुराणान्तरेष्वपि अष्टाङ्गयोगप्रतिपादनमस्ति-ब्रह्म० २३५-२४४ अ०; विष्णु० २।१३-१६अ०; ३।६; ६।५-७ अ०; वायु० ११-२३अ०; १०२ अ०; भाग० ३।२५-३३ अ०; ७।१३ अ०; अन्यत्र च; मार्क० ३६-४३ अ०; लिङ्ग० १।८-६ अ०; कूर्म० २।१०-११ अ०; गरुड० १।२२७-२२६ अ०; २१८ अ०; विष्णुधर्म० १०० अ० ( इदं विष्णुधर्मोत्तरतः पृथक् ); बृहन्नारदीय० ३१ अ० ( इदं नारदीयतः पृथक् ); विष्णु-धर्मोत्तर० ३।२७८-२८४ अ०; साम्ब० २८ अ०; नृसिंह० ६१ अ०।

अप्रकाशिते आग्नेयपुराणे क्रियायोगो व्याकृतः ( अ० २८ )। योगोऽयं मरीचितो वसिष्ठेन प्राप्तः[2]।

यतिधर्मप्रसङ्गेऽपि योगाभ्यास उक्तः ( १६१।२०-३१ )। तथैव धर्माचरणप्रसङ्गे ( १६५।८-२८ ) लघुर्योगाभ्यासो विवृतः। ब्रह्मज्ञान-प्रसंगेऽपि योगसाधनमुक्तम् ( ३७६।१-३२ )। योगविषये मतान्तराण्यपि १६५तमाध्याये दर्शितानि।

भक्तिविषयेऽस्मिन् पुराणे विशिष्टः सन्दर्भो नोपलभ्यते। श्वेता-श्वतरीयं वचनम् ( यस्य देवे परा भक्तिरित्यादि ) एवात्र दृश्यते ( ३७२।३६ )। पूजाव्रतादीनि भक्त्यङ्गभूतानीति कथयितुं शक्यते।

---

१. समष्टिबुद्ध्याद्युपादानिकैव हि सृष्टिः पुराणादिषु सांख्ययोगयोश्च प्रति-पाद्यते, न तु तदंशव्यष्टिबुद्ध्याद्युपादानिका ( सांख्यसूत्रभाष्य १।६३ )।

२. द्र० हाजराकृतः अग्निपुराणविषयको निबन्धः ( Our Heritage Vol. I. pp. 223–224 ).

पूजादिप्रसंगे आध्यात्मिकं ज्ञानं क्वचिदुक्तम्। पूजाकर्मणि अध्यात्मचिन्ता कथं करणीयेति ३०तमेऽध्याये उक्तम्। न्यासादिष्वपि आध्यात्मिकप्रदेशानुभवः प्रायश उक्तः ( द्र० २५ अ०; २७ अ०; ३३ अ० )।

२१४।३३-३५ इत्यत्र प्रासादतत्त्वं विवृतम्। इदमागमिकमिति प्रतीयते। आह च—"त्रिशून्यं यो विजानाति मुच्यतेऽसौ ध्रुवं द्विजः। प्रासादं यो न जानाति पञ्चमन्त्रमहातनुम्। अष्टत्रिंशत्कलायुक्तं न स आचार्य उच्यते ( २१४।३६-४० )।

कपिलादीनां श्रेयोविषयकं मतम् ३८२।३-१० इत्यत्र उद्धृतम्। अत्र कपिल-पञ्चशिख-गङ्गाविष्णु-जनक-ब्रह्म-जैगीषव्य-देवल-सनकानां मतानि कथितानि। इमे सर्वे आचार्याः सांख्ययोगप्रवक्तार एव। जनकवंशीयानां राज्ञां सांख्ययोगवेत्तृत्वमितिहासपुराणे प्रसिद्धमेव। करालजनकादयश्च विशिष्टाः सांख्यविद इति महाभारताज् ज्ञायते। ब्रह्मा खलु हिरण्यगर्भः। हैरण्यगर्भं योगशास्त्रं च प्रसिद्धम् ( द्र० अस्मत्कृता योगदर्शनभूमिका पृ० २८-३० )। ( जैगीषव्यादीनां विषये योगदर्शनभूमिकायाः चतुर्थं प्रकरणं द्रष्टव्यम्। )

अत्र 'गङ्गाविष्णु'—पदेन क आचार्यो लक्ष्यत इति न ज्ञायते। एतन्नामकः कश्चिदपि सांख्ययोगाचार्यो शास्त्रान्तराचार्यो वा न ज्ञायतेऽस्माभिः। प्रकरणमिदं विष्णुधर्मनामके[1] उपपुराणे अपि उपलभ्यते। अत्रापि परमश्रेयोविषये कपिलपञ्चशिख-मगारिष्ट-जनक-हिरण्यगर्भ-जैगीषव्य-देवल-सनकानां मतान्युक्तानि ( अ० ३८ )। मगारिष्टेत्यपि अश्रुतपूर्वं नाम, न क्वचिदपि व्याख्यानग्रन्थे मूलग्रन्थे वा श्रुतम्। किमत्र 'वार्षगण्येति' नाम अभिप्रेतम्? चतुरक्षरविशिष्टस्यास्याचार्यस्य नाम अत्र यदि स्यात् तर्हि संगतमेव स्यादिति। बालखिल्यनामको योगी साम्बपुराणे ( अ० २ ) उक्तः। जनक-पञ्चशिखादिभिः सहायमत्र स्मृतः। अस्य नामात्र स्मृतमित्यपि संभाव्यते।

ज्ञानयोगोऽद्वैतदर्शनं चाग्नेये स्पष्टमुक्तम् ( ३७७-३८० अ० )। अत्रौपनिषदमात्मज्ञानमद्वैतमार्गेण विवेचितम्। ३७७ तमेऽध्याये आत्म-

---

१. इदं पुराणं विष्णुधर्मोत्तरतः पृथक्; नेदमद्यापि मुद्रितम्; एतद्विषये Studies in the Upapuranas नामधेयो ग्रन्थो द्रष्टव्यः।

विषयका हेतवोऽपि प्रदत्ताः। ३७९तमेऽध्याये याश्च पञ्चधा गतय उक्तास्ता पुराणेष्वपि दृश्यन्ते। अत्रत्यम 'शब्दा ब्रह्मागममयमि'त्यादिकं प्रकरणं ब्राह्मे वैष्णवे च पुराणेऽपि उपलभ्यते।

**पाञ्चरात्रदर्शनम्**—आग्नेये पाञ्चरात्रमतस्योपन्यासः क्वचिद् दृश्यते[१]। पञ्चरात्रस्य महत्त्वं प्रामाण्यं च पुराणेषु उक्तमेव बहुधा। नारदः सात्वतं वैष्णवं तन्त्रं पञ्चरात्रागमं प्रोवाचेति भागवते उक्तम् (१।३।८)। अत्र पद्मे विशिष्टमेकं वचनमस्ति—

श्रौतं वैखानसं प्रोक्तं वासिष्ठं स्मार्तमुच्यते।
पञ्चरात्रविधानं यद् दिव्यागम इतीरितम्॥
(६।२८०।५५–५६)।

वैदिकमार्गाभावे पाञ्चरात्रमतमेव आश्रयणीयमिति—"अलाभे वेदशास्त्राणां पाञ्चरात्रोदितेन हि। मार्गेण मां भजन्ते ये ते मां प्राप्स्यन्ति मानवाः" (वराह० ६६।११)। पञ्चरात्रमतं द्वापरे प्रादुर्बभूवेति पौराणिकी प्रसिद्धिः—

कृते नारायणः शुद्धः सूक्ष्मरूप उपास्यते।
त्रेतायां यज्ञरूपेण पञ्चरात्रैस्तु द्वापरे॥ (वराह० ७०।२४)।

पाञ्चरात्रदृष्टिः मार्कण्डेये (४।३७; ४।५७), गारुडे (८ अ०, ३२।४–५), ब्राह्मे (१९२।५८) अन्यत्र चोपलभ्यते।

पक्षान्तरे पाञ्चरात्रस्य निन्दाऽपि पुराणे दृश्यते। मोहशास्त्रेषु पाञ्चरात्रशास्त्रं गणितं कौर्मे (१।१६।१११–११९; २।२१।३२)।

अथात्र केचन विशिष्टा दार्शनिकप्रमेया विविच्यन्ते। ३६९–७३१ तमाध्यायेषु आतिवाहिकंशारीरमुक्तम्। विष्णुधर्मोत्तरे गरुडे चापि

---

१. यत्तु डा० वीणापाणिपाण्डेयमहोदयेनोक्तम् 'आग्नेये चतुर्व्यूहवादो नास्तीति' (अग्नि० में चतुर्व्यूह का अभाव....हरिवंशपुराण का सांस्कृतिक अध्ययन पृ० १३१), तन्मुधैव। आग्नेये ह्युक्तम्—"वासुदेवादिमन्त्राणां पूज्यानां लक्षणं वदे। वासुदेवः संकर्षणः प्रद्युम्नश्चानिरुद्धकः" इति (२५।१)। ५९ तमेऽध्याये च वासुदेव-संकर्षण-प्रद्युम्नानिरुद्धानामाध्यात्मिकं स्वरूपं वर्णितम् (१–१० श्लो०)। एषां चतुर्णां प्रतिमाश्च यथास्थानमुक्ता आग्नेये।

आतिवाहिकशरीरचर्चाऽस्ति । इदं यातनीयं शरीरमित्यग्नौ (२०३।२-४) उक्तम् । दृश्यते भूयसी चर्चा दार्शनिकग्रन्थेषु एतद्विषये[१] । यातनाशरीरपदं च प्रशस्तपादभाष्ये विद्यते ।

दुःखविवरणं ३६९ तमाध्याये दृश्यते । त्रिविधदुःखविवरणं पुराणान्तरेष्वपि आत्यन्तिकप्रलयप्रस्तावे विद्यते ।

नाडीचक्रं प्राणाश्चेत्यादयो विषयाः २१४तमाध्याये निरूपिताः । पञ्चप्राणविद्या चेतिहासपुराणे बहुश उक्ता—लिङ्ग० १।८।६१-६७; वायु० ६७।५२-५६; शान्ति० १८५ अ०; अश्वमेध० २३ अ० । नाडीविवरणमपि स्कन्दादिषु बहुधोपलभ्यते, हठयोगग्रन्थेषु च ।

शरीरतः प्राणो यदा गच्छति तदा तस्य यानि निर्गमनद्वाराणि तानि ३७१।३-४ इत्यत्रोक्तानि । योगिनां प्राणो मूर्धतो निष्क्रामतीति ३७१।५ इत्यत्रोक्तम् । अत्र "शतं चैका हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका" इति श्रुतिरनुकूला । गीता (८।१२-१३) चानुसन्धेया ।

हृदयमनोविषये इदमुक्तम्—"देहस्य मध्ये हृदयं स्थानं तन्मनसः स्मृतम्" (२८०।३६) । वचनमिदं ब्रह्मपुराणे (१७९।५३) हरिवंशे च (१।४०।५३) दृश्यते ।।

---

१. ननु च सर्वगत आत्माऽऽकाशवद् विभुः, तस्य कीदृशी उत्क्रान्तिः ? कर्मोपार्जितशरीरत्याग एव उत्क्रान्तिः, न पुनर्मूर्तस्यैवार्थस्य देशाद् देशान्तरगमनम् । अथवा कैश्चिदिष्यते—अस्त्यन्यदन्तराभवं शरीरं सूक्ष्मं यस्येयमुत्क्रान्तिः । अन्यैस्तु अन्तराभवदेहो नेष्यते । यथाह भगवान् व्यासः—"अस्मिन् देहे व्यतीते तु देहमन्यन्नराधिप । इन्द्रियाणि वसन्त्येव तस्मान्नास्त्यन्तराभवः" । सांख्या अपि केचिन्नन्तराभवमिच्छन्ति विन्ध्यवासप्रभृतयः । कोऽयमन्तराभवो नाम ? अस्मिन् शरीरे नष्टे मातृकुक्ष्यादिस्थानं द्वितीयशरीरग्रहणार्थं यावन्न प्राप्तं तावदन्तरा निरुपयोगिशरीरं उपजायते सूक्ष्मम्, यस्य न क्वचित् संयोगो नाग्न्यादिदाहो न महाभूतैः प्रतिबन्धः (मनु० १।५५ मेधातिथिभाष्य) । एतद्विषये योगभाष्यमप्यालोचनीयम्—"घटप्रासादप्रदीपकल्पं संकोचविकासि चित्तं शरीरपरिमाणाकारम् इत्यपरे प्रतिपन्नाः । तथा च अन्तराभावः संसारश्च युक्त इति, वृत्तिरेवास्य विभुतः संकोचविकासिनीत्याचार्यः" (४।१०) ।

कथमिदमुपपद्यत इति ? हृदयमेव सर्वबोधसंचरणकेन्द्रभूतमिति मन्तव्यम् । अतएव देहस्य मध्ये हृदयस्य स्थितिरुक्ता । हृदयं च आध्यात्मिकप्रदेशस्तत्त्वतः; यद्यपि तदधिष्ठानभूतः शरीरांशोऽप्यस्ति, स च पुण्डरीकाकारमांसपरिच्छिन्न इति पूर्वाचार्याः । आह शंकराचार्यः — "हृदि पुण्डरीकाकारमांसपरिच्छिन्ने" ( प्रश्नोपनिषद्भाष्य ३।६ ), "हृदयमिति पुण्डरीकाकारो मांसपिण्डः प्राणायतनः अनेकनाडीसुषिर ऊर्ध्वनालोऽधोमुखः" इति च ( तै० उप० १।६ भाष्य )। यथा खलु आध्यात्मिकनेत्रस्याधिष्ठानं चक्षुर्गोलक एवं सर्वबोधमर्मस्थानभूतहृदयस्याधिष्ठानं वक्षोऽन्तर्गतो मांसपिण्डविशेषः । सुखसौमनस्यादौ अधिगते वक्षोऽन्तःप्रदेशे स्फीतिरनुभूयते इति सार्वलौकिकोऽनुभवः । हृदयमिदं मनसः स्थानम्, यथोक्तं शान्तिपर्वणि—

यतो निर्याति विषयो यस्मिंश्चैव विलीयते ।
हृदयं तद् विजानीयान्मनसः स्थितिकारणम् ॥

अनयैव रीत्या अग्निवाक्यं व्याख्येयमिति दिक् ।

नरकगणना खलु ३७१।१३–१८ ( अध्यायोऽयं कृत्स्नो द्र० ) इत्यत्र कृता । अत्र 'अष्टाविंशतयः कोट्यः' इति वाक्यं प्रयुक्तम्, अतो गम्यते अष्टाविंशतिप्रकाराश्च नरका इति । २०३तमाध्यायेऽपि नरकस्वरूपं वर्णितम् । प्रकारार्थे कोटिशब्दोऽन्यत्र पुराणे दृश्यते—"त्रयस्त्रिंशत् सुराणां या कोटिः श्रुतिसमीरिता" इति ( काशीखण्डे ) ।

शरीर-गर्भजन्मादिविषयिणी चिन्ता ३६९–३७०तमाध्याययोः प्रपञ्चिता । स्वेदजादिप्राणिविषये वह्निपुराणगतं काश्यपीयसर्गप्रकरणं द्रष्टव्यम् ( द्र० स्वेदजशब्दसंबद्धा टिप्पणी शब्दकल्पद्रुमगता ) । अत्र भोगदेहः ( प्रेतदेहं परित्यज्य भोगदेहम्— ३६९।१३ ) उक्तः; प्रेतदेहश्च न अवश्यम्भावीति, यथाह—"आयुषोऽन्ते प्रहायेदं क्षीणप्रायं कलेवरम् । संभवत्येव युगपद् योनौ नास्त्यन्तराभवः । तत्रास्य स्वकृतं कर्म छायेवानुगतं सदा । फलत्यथ सुखार्हो वा दुःखार्हो वाथ जायते" ( वनपर्व १८३।७७–७८ ) ।

आग्नेये उक्तम्—गर्भावस्थो जीव इत्थं चिन्तयति यद् गर्भाद् विनिर्गतोऽहं मोक्षज्ञानं करिष्यामीति ( ३६९।२६ ) । प्रतिज्ञेयं भूमिष्ठेषु सत्सु विस्मृता भवति सर्वेषां देहिनाम् । कथं जीवः इमां प्रतिज्ञां पूर्वजन्म-

वृत्तान्तं च विस्मरति, इत्यत्र चक्रदत्त आह—'योनियन्त्रपीडायामपि हि उद्भूतेन तमसा विप्लुतं मनो नातिक्रान्तजन्मगतं स्मरति, यस्तु उद्भूतसत्त्वः तमसा नाभिभूयते स स्मरत्येवातिक्रान्तजन्मानुभूतम्" ( चरक-शरीरस्थान ३।१९ ) । गर्भोपनिषद्वचनमप्यत्रानुसन्धेयम्—"नवमे मासि पूर्वजातिं स्मरति शुभाशुभं च कर्म विन्दति । अथ योनिद्वारं सम्प्राप्तो यन्त्रेणापीड्यमानो महता दुःखेन जातमात्रस्तु वैष्णवेन वायुना संस्पृष्टस्तदा न स्मरति जन्ममरणानि, न च कर्म शुभाशुभं विन्दति" इति ( ७ ) ।

पुराणेऽस्मिन् प्रायशः 'भुक्तिमुक्तिमवाप्नोति' 'भुक्तिमुक्तिदम्' इत्येवंजातीयकानि वचांस्युपलभ्यन्ते । दृष्टिरियं पुराणेषु बहुलं दृश्यते ।

उक्तमाग्नेये—"कर्मभूमिरियं ब्रह्मन् फलभूमिरसौ मता" इति ( ३६९।६ ) । दृष्टिरियं बहुलमुपलभ्यते इतिहास-पुराणेषु—"ऋषयस्तु महात्मानः प्रत्यक्षागमबुद्धयः । कर्मभूमिमिमां प्राप्य पुनर्यान्ति सुरालयम्" ( वन० १८३।८५ ), "इह यत् क्रियते कर्म तत् परत्रोपभुज्यते । कर्मभूमिरियं ब्रह्मन् फलभूमिरसौ मता" ( वन० २६१।३५ ), "कर्मभूमिरियं लोके इह कृत्वा शुभाशुभम् । शुभैः शुभमथाप्नोति तथाऽशुभमथान्यथा" ( नारदीय० १।४४।१४ ) ।

## ( ६ ) लौकिकानि शास्त्राणि

यतो हीदं पुराणं विद्यासारमयमतोऽत्र विविधाभिर्विद्याभिर्भाव्यमिति निश्चप्रचम् । यथा चात्र योगाद्यध्यात्मविद्यानां[1] प्रतिपादनं तथैवात्र लौकिकानां धनुर्वेदादिशास्त्राणामपि विवरणमास्ते ।

१. विद्यायाः परापररूपो विभागो मुण्डकोपनिषत्प्रतिष्ठ इति प्रागुक्तम् । अत्र ( १।५-१७ ) अष्टादश विद्या गणिताः—चत्वारो वेदाः, षट् अङ्गानि, चत्वार उपवेदाः, मीमांसा, धर्मशास्त्रं, पुराणं, न्यायश्च । केचित् खलु मीमांसाधर्मशास्त्रादीनि उपाङ्गत्वेन वर्णयन्ति ( द्र० प्रस्थानभेदः ) । अत्र याजुषचरणव्यूहगतं वाक्यं द्रष्टव्यम्—"प्रतिपदम् अनुपदं छन्दोभाषा धर्मो मीमांसा न्यायतर्का इत्युपाङ्गानि" ( द्वितीया कण्डिका ) । मतभेदकारणं चिन्तनीयं सुधीभिः ।

वल्लालसेनमहोदयेन आग्नेयादीनां पुराणानां बहुविद्यामयत्वं प्रामाण्याप्रामाण्ये च कण्ठत उक्ते । वल्लालवचनानि च दानसागरग्रन्थतः ( India Office Ms.no 719, fol. 3b–4a ) हाजरामहोदयेन संगृहीतानि—

तार्क्ष्यं पुराणमपरं ब्राह्ममाग्नेयमेव च ।
त्रयोविंशतिसाहस्रं पुराणमपि वैष्णवम् ॥
षट्साहस्रमितं लिङ्गं पुराणमपरं तथा ।
दीक्षाप्रतिष्ठा - पाषण्डमुक्तिरत्नपरीक्षणैः ॥
मृषावंशानुचरितैः कोशव्याकरणादिभिः ।
असंगतकथाबन्ध - परस्परविरोधितः ॥
तन्मीनकेतनादीनां भण्डपाषण्डलिङ्गिनाम् ।
लोकवञ्चनमालोक्य सर्वमेवावरी(धी)रितम् ॥

अत्र परस्परविरोधतः, परस्परविरोधिभिरिति वा पाठः श्रेयान् ।[1]

**आयुर्वेदः**—आग्नेये विद्येयं विस्तरेणोक्ता ( २७९–२९२ ) । विद्याप्रतिपादने सुश्रुतो धन्वन्तरिश्च स्मृतौ । आयुर्वेदसंप्रदाये इमावाचार्यौ अतिप्रसिद्धाविति । अत्र यद् वैद्यकशास्त्रविवरणं तद् बाहुल्येन वाग्भटकृताष्टाङ्गहृदयमनुकरोतीति दृश्यते ।

धन्वन्तरिणा नर-अश्व-गजायुर्वेदाः प्रोक्ताः । इदमस्माभिः श्रुतं यद् गङ्गाधरकविराजनामा वैद्यकविद् एषामध्यायानां टीकां चकारेति । गङ्गाधरः १७९८ खीष्टाब्दे जातो वंगदेशान्तर्गते यशोहरमण्डले ।

आत्रेयाचार्यस्य नाम २८५।१ इत्यत्र स्मृतम् । एतत्प्रोक्ता योगा बहुश उक्ताः । आत्रेयस्य प्रशस्तिः आयुर्वेदशास्त्रे दृश्यते—"यथा सिंहो मृगेन्द्राणां.. तथात्रेयोऽस्ति वैद्यके" इति । अयं 'पुनर्वसुः आत्रेय' एव । ( आयुर्वेद का इतिहास, पृ० १७१-१९१ ) ।

धन्वन्तरिनामाऽचार्य आयुर्वेदप्रवर्तक इति स्मर्यते । अमृतमन्थने

---

१. Discovery of the Genuine Agneya Purana ( Journal of the O. I. M. S. U., Baroda, vol. V. No. 4. )

धन्वतरिं भास्करो जग्राहेति मत्स्यपुराण उक्तम् ( २५१।३-४ ) । सुश्रुताध्यापको धन्वन्तरिः खलु काशिराजो दिवोदास एवेति सुश्रुतासंहितात एव ज्ञायते ( सूत्रस्थान १।३ ) । दिवोदास एव धन्वन्तरिरिति भावप्रकाशे स्पष्टमुक्तम् (१।७८) । अमृतमन्थनोत्थो धन्वन्तरिरेव दिवोदासतया प्रादुर्भूत इति प्राञ्चः । धन्वन्तरिकृताः सिद्धयोगा आसन्निति २७९।२ श्लोकतो ज्ञायते । स्मर्यते खलु योगचिन्तामणिनामको धन्वन्तरिप्रणीतो ग्रन्थः ।

**अश्वायुर्वेदः**—२८७तमाध्यायतः २९०तमाध्यायपर्यन्तोऽयम् । अश्वलक्षणं अश्वचिकित्सा च शालिहोत्रेण सुश्रुताय प्रोक्तेत्यत्र उक्तम् । अश्वविद्याऽत्यन्तं प्राचीना । सभापर्वणि 'अश्वसूत्रेति' नाम लभ्यते— 'हस्त्यश्वरथसूत्राणि' ( ५।१२१ ) । सूत्रं संक्षिप्तोपदेश इत्यत्र देवबोधः । बह्वः खल्वाचार्या अश्वशास्त्रानुशासनं कृतवन्त इति ज्ञायते[1] ।

शालिहोत्रसंहिता प्रकाशिता । शालिहोत्रः स्वसुताय सुश्रुतायाश्वशास्त्रमुवाच–इत्यत्रोक्तम्[2] । भगवान् शालिहोत्रः 'हयानां कुलतत्त्ववित्' इति पदेन स्तुतः । तुरङ्गघोषः खलु शालिहोत्रस्य पिता—इति नकुलकृत-अश्वचिकित्सायामुक्तम् ( १।१ ) । द्वादशसाहस्री खलु शालिहोत्रसंहिता ( चक्रे द्वादशसाहस्रीं तदाख्यां संहिताम् ) ।

शालिहोत्रस्य प्रसिद्धिः सर्वत्रासीत् । अमरकोशटीकासर्वस्वे ( भाग० १ पृ० ३३ ), बृहत्संहिताटीकायां ( ६० अ० ), वल्लभदेवकृतशिशुपालवधटीकायाम् ( ५।१०; ५।६० ), विष्णुधर्मोत्तरे ( २।४६ अ० ), अद्भुतसागरे ( पृ० ६२४, ६२८ ) चास्य मतान्युद्धृतानि ।

**गजायुर्वेदः**—२८७तमाध्याये इयं विद्या विवृता । अत्र गजस्य लक्षणं चिकित्सा च प्रोक्ता ( २८७।१ ) । २९१तमेऽध्याये च गजशान्तिः । गारुडेऽपि ( १।२०१।३३-३९ ) गजचिकित्सा दृश्यते ।

---

१. द्र० भगवद्दत्तकृतः अश्वायुर्वेदविषयको निबन्धः ( वेदवाणी ४।२, ४ ) । राजगुरुहेमराजशर्मकृतः काश्यपसंहितोपोद्घातश्चात्र आलोच्यः ।

२. दुर्लभगणकृते सिद्धोपदेशसंग्रहनामधेयेऽश्ववैद्यकग्रन्थे—"शालिहोत्रेण गर्गेण सुश्रुतेन च भाषितम् । तत्त्वं यद् वाजिशास्त्रस्य तत् सर्वमिह संस्थितम्" इत्युक्तम् ( काश्यपसंहितोपोद्घात पृ० ७० ) ।

अत्र धन्वन्तरिर्वक्ता, श्रोता च सुश्रुतः, अतः प्रतीयते सुश्रुतकृतो धन्वन्तरिकृतो वा गजायुर्वेदग्रन्थ आसीत्[1]।

गजविद्याविषये मत्स्ये उक्तं यत् सोमपुत्रो बुधो गजवैद्यकस्य प्रणेतेति—

तारोदरविनिष्क्रान्तः कुमारश्चन्द्रसन्निभः।
सर्वार्थशास्त्रविद् धीमान् हस्तिशास्त्रप्रवर्तकः॥

नाम्ना यद् राजपुत्रीयं विश्रुतं गजवैद्यकम्।
राज्ञः सोमस्य पुत्रत्वाद् राजपुत्रो बुधः स्मृतः॥

(२४।२–३)।

राजपुत्रीयनामकं हस्तिशास्त्रमासीदिति प्रसिद्धिः। मल्लिनाथेन रघुवंशटीकायामुक्तम्—"त्वग्भेदाच् शोणितस्रावान् मांसस्य क्रथनादपि। आत्मानं यो न जानाति तस्य गम्भीरवेदिता इति राजपुत्रीये" (४।३९)। अत्रैव शास्त्रान्तरमपि मल्लिनाथः सस्मार—"चिरकालेने"-त्यादि। पालकाप्येन हस्तिशास्त्रान्तर्गतगजहृदयप्रकरणेऽपि सोमपुत्रो बुधः स्मृतः—'विद्यात् तान्यफलान्येवं गीयते सोमसूनना" इति। राघवन्महोदयेन Gleanings from Somadeva's Yasastilaka champu नामके निबन्धे विषयोऽयं विशदीकृतः[2]।

पालकाप्याचार्यस्य नामाग्नेये स्मृतम् (२८७।१)। अयं लोमपादमुपदिदेश गजविद्यामित्यत्रोक्तम्। गजशान्तिश्च शालिहोत्रेणोक्ता, (२९१।१)। आचार्योऽयमतिप्रसिद्धः। तन्त्रवार्त्तिके कुमारिलेन पालकाप्यप्रयुक्तम् 'उभाभ्य' इति पदमुदाहृतम् व्याकरणदुष्टप्रयोगनिदर्शनार्थम्

---

१. पुराणे यच्छास्त्रविषये येषामाचार्याणां मतानि प्रवचनानि वा उद्धृतानि सन्ति, ते आचार्यास्तच्छास्त्राणां प्रवक्तार आसन्निति प्रायेण दृश्यते। मत्स्ये उत्पातशान्तिप्रकरणे गर्ग एव वक्ता, गर्गाचार्यस्तु एतच्छास्त्रविदासीदिति बृहत्-संहिता-तट्टीकातः अद्भुतसागरतश्च प्रतीयते। पञ्चशिखकर्तृकं सांख्यप्रवचनं याज्ञवल्क्यकृतं योगप्रवचनं चेतिहासपुराणेषु दृष्टम्, एतावाचार्यौ सांख्ययोग-शास्त्रकाराविति निश्चप्रचम्। आचार्यमतानाम् उपबृंहितं रूपमेव पुराणेषु निबद्धमिति स्वीकार्यम्, अतः पुराणोक्तविवरणं सुविचार्यैव ग्राह्यम्।

२. J. G. N. Jha R. 1. Vol. I. No. 3, pp. 367–368.

(पृ० २५९ आनन्दा०)। शिवदासकृततत्त्वचन्द्रिकाटीकायाम् पालकाप्य-मतमुद्धृतम् (पृ० ७०४); चिकित्सासंग्रहटीकायां रत्नप्रभायामपि पालकाप्यमतं दृश्यते। पालकाप्यस्य ग्रन्थः प्रकाशितः। अत्र प्रथमे खण्डे महारोगस्थानम्, द्वितीये क्षुद्ररोगस्थानम्, तृतीये शल्यस्थानम्, चतुर्थे चोत्तरस्थानमिति; ग्रन्थे बहुत्र पाठास्त्रुटिताः प्रतिभान्ति।

बृहत्संहितायां सप्तषष्टितमाध्याये हस्तिलक्षणं चतुरधिकनवति-तमाध्याये हस्तिचेष्टितं च वर्णितम्। लक्षणप्रकाशे हस्तिलक्षणादिक-मधिकृत्य बहूक्तम्। महाभारते 'हस्तिसूत्र'-पदं प्रयुक्तमिति (सभा० ५।१२१)।

हस्तिशास्त्रमधिकृत्य बहवो ग्रन्थाः प्रणीताः। अस्मिन् विषये आकाशभैरवकल्पनामको निबन्धो द्रष्टव्यः (द्र० कर्नाटक हिस्टोरिकल रिव्यु पत्रिका ५।१; गोडेकृतो निबन्धः)। आयुर्वेदाचार्या अपि हस्ति-शास्त्रं प्रोचुः। श्रूयते च अग्निवेशकृतं हस्तिशास्त्रम् (आयुर्वेद का इतिहास पृ० २०२)[१]।

**वृक्षायुर्वेदः**—आग्नेये २८२ तमाध्यायेऽयं विवृतः। विद्येयं सुश्रुतेन प्रोक्ता, अतो गम्यतेऽस्मिन् विषये सुश्रुतस्यापि किमपि प्रवचनमा-सीदिति। सुश्रुतसंहितायां प्रचलितायां वृक्षायुर्वेदप्रसंगो नास्ति, परन्तु बीजाङ्कुरादिविषयिणी चर्चोपलभ्यते। आग्नेये वृक्षरोग-चिकित्साश्च मुख्यत उक्ताः।

इदमत्र विज्ञेयं यद् बहव आचार्या वृक्षायुर्वेदं प्रोचुः काश्यप-पराशर-सारस्वतादयः। बृहत्संहिताया उत्पलटीकायां (५४ तमाध्याये) एतेषामाचार्याणां वचांस्युद्धृतानि। शार्ङ्गधरपद्धत्यां वृक्षायुर्वेद-प्रसंगोऽस्ति; उपवनविनोदश्च तस्यांशभूतः। अर्थशास्त्रे वृक्षगुल्मायुर्वेद-शब्दः प्रयुक्तः (२।२४ अ०)। वृक्षपोषणवर्द्धनादिविषया विशेषेणोक्ता

---

१. प्राकृतभाषायामपि गजशास्त्रविषयका ग्रन्था रचिता इति वेदि-तव्यम्। गजचिकित्सा-गजवैद्यक-गजस्वरूपप्रकाश-गजनिरूपण-गजलक्षण-गजप्रकाश-गजविलासादयो ग्रन्थाः संस्कृते हिन्द्यां च यथाकालं रचिताः (द्र० अगरचन्दनाहटाकृतः गजशास्त्रविषयको निबन्धः, सिद्धान्त १६।६ अङ्के प्रकाशितः)।

बृहत्संहितायाम्। पराशरेणापि वृक्षविषये किमपि शास्त्रमुक्तमिति ज्ञायते।

**गोचिकित्सा**—२८२ तमाध्याये। गोमतीविद्या च २९२।१३ श्लोके उक्ता। अयं मन्त्रविशेषः प्रायश्चित्ततत्त्वे ( पृ० ५२२-५२३) दर्शितः—"गोमतीविद्यामाह प्रायश्चित्तकाण्डकल्पतरौ यमः..." इत्यादिना। अस्यां विद्यायां गावः प्रशस्यन्ते। मदनपारिजातेऽपि विद्येयमुक्ता (पृ० ८६२)।

बृहत्संहितायां गोलक्षणाध्यायो दृश्यते ( ६१ अ० ) यत्र गवां वृषभाणां च शुभाशुभलक्षणानि उक्तानि। अत्र पराशरस्य शालिहोत्रस्य च श्लोका उद्धृताः।

**रत्नपरीक्षा**—२६४तमाध्याये। गारुडेऽपि विषयोऽयं प्रपञ्चितः ६८-८० अ० )। गारुडे रत्नपरीक्षाप्रसंगे व्याडि-नाम स्मृतम्। रसाचार्योऽयमिति प्रसिद्धिरस्ति (दृश्यतामेतद्विषयको मत्कृतो निबन्धः वेदवाणी १०।६ )। लक्षणप्रकाशे बहूक्तमस्मिन् विषये[1]।

**स्त्रीपुंसलक्षणम्**—२४३-२४५ अध्यायेषु। अत्र स्त्री-पुरुषशरीरचिह्नानि शुभाशुभज्ञापकानि विचार्यन्ते। गारुडेऽपि ( ६३-६३ ) विद्येयं प्रपञ्चिता। 'कच्चिदङ्गेषु निष्णातः' ( सभा० ५।४२ ) इति श्लोके इयमेव विद्या निर्दिष्टा—इति व्याख्यातारः[2]। लक्षणप्रकाशे एतद्विषये बहूनि वाक्यान्युद्धृतानि। प्राकृतभाषायामियं विद्या अङ्गविज्जेति पदेनोच्यते। पाणिनीये गणपाठे ( ४।३।७३ ) अङ्गविद्यायाः, तस्या व्याख्यायाश्चापि निर्देश उपलभ्यते।

अत्रेदमुक्तं यत् समुद्रनामाऽऽचार्योऽस्या विद्याया मूलप्रवक्तेति। ततश्चास्या विद्याया सामुद्रिकमित्यपरं नाम।

**धनुर्विद्या**—२४९-२५२ अध्यायेषु। अतिप्रसिद्धेयं विद्या प्राचीने काले। ( मधुसूदनसरस्वतीभिः प्रस्थानभेदे एतद्विषये स्पष्टं विवरणं प्रदत्तम् )। एतच्छास्त्रप्रवर्तनविषये प्रपञ्चहृदय उक्तम्—"धनुर्वेदो

---

१. संस्कृतसाहित्यपरिषत्-पत्रिका ( ४।११-१२ ) रत्नपरीक्षाविषये द्रष्टव्या।

२. अत्र अङ्गपदेन शिक्षाद्यङ्गानि गृह्यन्त इति देवबोधः। मतमिदमसाध्विति प्रतिभाति।

ब्रह्म-प्रजापति-इन्द्र-मनु-जमदग्निसुतादिभिः अध्ययनाध्यापनपरम्परानुगतो विश्वामित्रादिभिरनन्तरं शास्त्रत्वमापन्नः" ( उपवेदप्रकरणम् )। जमदग्निः खल्वस्यां विद्यायां कृतपरिश्रम इति "रथचर्या पदातिचर्या च जमदग्निराह" इति डल्हणवचनतो विज्ञायते ( सुश्रुतसं० चिकित्सा० १२।११ )। भरद्वाजोऽप्यस्या विद्यायाः प्रवक्तेति शान्तिपर्वतो विज्ञायते ( २१०।२१ )। तथैव अगस्त्योऽपि ( आदिपर्व १५२।१० कुम्भकोणसंस्क० )। विश्वामित्रधनुर्वेदस्य नाम मधुसूदनेन गृहीतम्, ग्रन्थश्च नष्ट एव। वासिष्ठी धनुर्वेदसंहिता च प्रचलति। शुक्रनीतिसारे, वैशम्पायनोक्तधनुर्वेदे, वीरचिन्तामणौ, कामन्दकीये, नीतिमयूखे च विषयोऽयं सामान्य-विशेषरूपेण प्रतिपादितः[1]।

**वास्तुविद्या**—अग्नौ वास्तुविद्या बहुश उपवर्णिता ( ४० अ०; ९३-९४ अ०; १०५-१०६ अ०; २४७ अ० )। अत्र वास्तुशास्त्रगता ये विषयास्ते विष्णुधर्मोत्तरेऽपि प्रतिपादिताः (२।२९-३१ अ०)। समराङ्गणसूत्रधारेऽपि इमे विषयाः स्पष्टमुपवर्णिताः। मात्स्ये ( २५२-२७० अ० ) वास्तुविद्या प्रपञ्चिता।[2]

पुराणेषु वास्तुविषयिणी चर्चा बहुत्रोपलभ्यते। अग्नौ ( ६५।७ ) गर्गविद्याऽभिहिता। गर्गविद्येतिशब्देन गर्गप्रोक्ता 'निवासयोग्यगृहनिर्माणकला' अभिप्रेता। दृश्यते खलु गर्गकृतस्य वास्तुशास्त्रस्य नाम बृहत्संहितायां सनत्कुमारवास्तुशास्त्रे चेति गवेषकाणां मतम्। विश्वकर्मप्रकाशे ( १९।११० ) उक्तं यद् गर्गतः पराशरो वास्तुशास्त्रं लेभ इति।

वास्तुविषयकेषु ग्रन्थेषु अग्निपुराणनाम स्मृतमिति प्रागुक्तम्।

**प्रतिमालक्षणम्**—( ४९-५५ अ० )—पूज्यदेवप्रतिमानां लक्षणं निर्माणं चात्राभिहितम्। एषु अवतार-देवी-योगिनी-ग्रह-यक्षादीनां प्रतिमा अपि लक्षिताः।

---

१. संस्कृतसाहित्यपरिषत्पत्रिकायां धनुर्वेदमधिकृत्य पुष्कलो विचारः कृतः ( ४।७-१२ )।

२. द्र० Matsya Purana—A Study p. 342-370; वास्तुविषये महान्तो ग्रन्था इदानीन्तनैर्विद्वद्भिर्विरचितास्त इह आलोच्याः।

विष्णुधर्मोत्तरेऽपि प्रतिमावर्णनमुपलभ्यते ( तृतीये खण्डे )। तथैव मत्स्येऽपि ( २५८-२६४ अ० )। मानसारे, चतुर्वर्गचिन्तामणौ, सूत्रधारमण्डने, रूपमण्डने, बृहत्संहितायां ( ५८ अ० ) च विषयोऽयं प्रतिपादितः।

**राजधर्मः**——पुष्करेण रामाय राजधर्म उक्तः[1] (२१८-२३७ अ०)। इयं पुष्करोक्ता नीतिरित्युच्यते ( २३८।१ )।

पुष्करोक्ता नीतिर्विष्णुधर्मोत्तरेऽपि ( २।६५-७२ अ०; १४५-१६५ अ० )। विष्णुधर्मोत्तरत इदमपि विज्ञायते यद् रामोऽत्र परशुराम एव ( अग्नि० १५५।२७ अपि द्र० )। पुष्करस्तु वरुणसुत इति ( विष्णुध० २।१।७-९ )। विष्णुधर्मोत्तरगतः पुष्करयज्ञ-रामसंवादस्तु आत्मानन्दकृतेऽस्यवामीयभाष्ये स्मृतः।

प्रकरणेऽस्मिन् राजनीतिः राजकृत्यं च आलोचितम्। एतत्प्रकरणगता बहवः श्लोका राजधर्मनिरूपणावसरे निबन्धकारैरुद्धृता इति दृश्यते। स्मृतिषु इतिहासपुराणे च विषयोऽयमालोचितो बहुधा— वन० १५० अ०; सभा० ५; उद्योग० ३३-३४ अ०; शान्ति० १-१३१ अ०; आश्रमवासिक० ५-७ अ०; रामायण २।१५, ६७, १००, ६।१७-१८, ६३ अ०; मनु० ७-९ अ०; याज्ञवल्क्यस्मृति १।३०४-३६७, वृद्धहारीतस्मृति ७।१८८-२७१; बृहत्पराशर १० अ०; गरुड० १०८-११५ अ०; मत्स्य० २१५-२४३ अ०; कालिका० ८७ अ० (History of Dharmasastra Vol. III. p. 13 ).

राजशास्त्रप्रणयनं खलु इतिहासपुराणे बहुधोक्तम्—शान्तिपर्वणि राजशास्त्रप्रणेतॄणां विशालाक्षादीनां नामानि उक्तानि ( ५८।२-३ )। नीतिप्रकाशिकायामपि केचन आचार्याः स्मृताः—

बृहस्पतिश्च शुक्रश्च भारद्वाजो महातपाः।
वेदव्यासश्च भगवान् तथा गौरशिरा मुनिः।
एते हि राजशास्त्राणां प्रणेतारः परन्तपाः॥

---

१. अत्र 'Political thought and practice in the Agnipurana'नामा निबन्धो द्रष्टव्यः ( Purana Vol. III. pp. 23-37 ).

**रामनीतिः** ( २३८–२४२ अ० )—नीतिपदेन राजधर्मः सामान्यनीतिश्च गृह्येते इत्यादौ विज्ञेयम्[1] । अत्र तु राजधर्म एव ।

रामनीतिः खलु कौटिल्यार्थशास्त्रमनुकरोति बहुलम् इति दृश्यते । कामन्दकीयनीतिरप्येतद्विवरणस्योपजीव्यभूतेति विज्ञायते[2] ।

**काव्यम्** ( दृश्यं श्रव्यं च )—अत्र श्रव्य-काव्यलक्षणम्, काव्यभेदः, अलङ्काराः, काव्यगुणाः, काव्यदोषाश्चेत्येते विषया संक्षेपेण उपदर्शिताः ( ३३७ अ०, ३४३–३४७ अ० ); तथैव नाटकप्रकरणादीनां

---

१. बहुशो नीतिशास्त्रमुक्तं पुराणेषु महाभारते च—भार्गवो नीतिशास्त्रं च जगाद जगतो हितम् ( शान्ति० २१०।२० ), नीतिवित्स्वङ्गिरा मुनिः ( ब्र० वै० ४।७३।८२ ), उवाच तं जगन्माता नीतिसारम् ( ब्र० वै० ४।३७।१७ ), बृहस्पतिप्रोक्ता नीतिः ( ब्र० वै० ४।४०।१३२–१५३ ), वसुदेवप्रोक्ता नीतिः वै० ४।७।१७–३२ ), और्वप्रोक्ता नीतिः ( ब्र० वै० ४।२४।३३–४१ ), नीतिसारं सुरेन्द्राय इदमूचे बृहस्पतिः ( गरुड० १।१०८।१० ) ।

२. The first verse of Ramaniti......is almost a verbal quotation from the Kamandaka Nitisara 1·20 and the next four verses also come from the same source. Then the Purana reproduces Kamandaka......showing thereby that the Ramaniti is largely Kamandakaniti severely summarised and that this part of Agnipurana comes much later than the Gupta period······. On the whole the Ramaniti is a good abridgement of the Kamandakanitisara······. It has nothing of the lofty-mindedness of Rama. ( Political Thought and Practice in the Agnipurana, Purana Vol. III. pp. 35–37 ).

It is much more secular in its conception and nearer to Kautilya's teaching than the Niti of Puskara summarised above ( ibid p. 35 ).

निरूपणमपि ३३८तमेऽध्याये कृतम्। रसानां रीत्यभिनयादीनां च विवेचनं ३३९-३४१तमाध्यायेषु कृतम्[1]।

एतद्विषये अग्निपुराणं भरतमाश्रितवदिति 'भरतेन प्रणीतत्वाद् भारती रीतिरुच्यते' ( ३३९।६ ) इति वचनेन, नाट्यशास्त्रश्लोकानुकरण-दर्शनेन च निश्चीयते। अग्निपुराणकारो ध्वन्यालोकादिग्रन्थेभ्यश्च श्लोकानाहृतवानिति काणेमहोदयः प्रतिपादयति ( History of Sanskrit Poetics ग्रन्थे अग्निपुराणप्रकरणे )। मतमिदं नायुक्तं प्रतीयते, यतो हि धर्मशास्त्रगता विषया अप्यस्मिन् पुराणे याज्ञवल्क्यादि-कृतग्रन्थेभ्य आहृताः।

अग्निपुराणगतमेतद् विवरणं भोजकृतसरस्वतीकण्ठाभरणग्रन्थस्यो-पजीव्यभूतमिति दे-महोदयस्य मतम् ( द्र० J. R. A. S. 1923, pp. 537–541 ).

विष्णुधर्मोत्तरे ( तृतीये खण्डे ) अनुप्रासादीनां ( चतुर्दशाध्याये ), शास्त्रेतिहासकाव्यादीनाम् ( पञ्चदशेऽध्याये ), प्रहेलिकादीनां ( षोडशेऽध्याये ), नाटकादीनां ( सप्तदशेऽध्याये ) च विवरणमस्ति। तदनन्तरं च बहुषु अध्यायेषु गीतनाट्यरसादयोऽपि विवृताः ( द्वात्रिंशद-ध्यायपर्यन्ताः )।

## ( ७ ) भूवृत्तं भुवनकोशश्च

भूः, भुवनकोशः, तीर्थक्षेत्राणि चाग्निपुराणगतानि इह विचार्यन्ते।

भूः—भूविषयेऽस्मिन् पुराणेऽतिसंक्षिप्तं कथनमेव दृश्यते। वराहेण पृथिवी उद्धृतेति कथा नात्रोक्ता वराहप्रसंगे ( ४।१-३ )। हिरण्य-गर्भोऽण्डं द्विधाकृत्वा दिवं भुवं च निर्ममे—इति मतं १७।८-१० इत्यत्र दृश्यते। एकादशे श्लोके 'अप्सु पारिप्लवां पृथ्वी...' इत्युक्तम्। अत्र

---

१. बहवो विद्वांसोऽग्निगतं काव्यविषयमाश्रित्य विचारितवन्तः—P.C. Lahiri कृतो निबन्धः ( I.H.Q. Vol. XI. pp. 448–460 ), Dr. V.Raghavanकृतो निबन्धः ( I. H. Q. Vol. X, pp. 767–779 ); हिन्दीभाषायामपि अग्निगतविषयमाश्रित्य केचन ग्रन्थाः प्रणीताः ( अग्निपुराण का काव्यशास्त्रीय भाग-नामा ग्रन्थः द्र० ) इति दृश्यते।

वराहकृतपृथ्वीधारणस्योल्लेखोऽस्फुटरूतेणावलोकाते । एतादृशे सृष्टि-विवरणस्थले पुराणान्तरे वराहकृतपृथ्वीधारणकथा नूनमभिहिता भवतीति विज्ञेयम् । अन्यत्र कण्ठतश्चोक्तमस्मिन् पुराणे—"वराहस्तु .. उज्जहार भुवं मग्नाम्" ( २७६।१५ )।

'पञ्चाशत्कोटिविस्तरा भूमिः' इत्युक्तम् ( ११९।२८ )। परिमाण-मिदं पुराणेपूक्तम् बहुशः[1]। कथमिदं परिमाणमुपपन्नं भवतीति सुधीभिर्विभाव्यम् ।

प्रलयप्रसङ्गेऽपि पृथ्वीपरिणाम उक्तः ( ३६८।३-१० )। पुराणा-न्तराण्यपीदमेव मतमभिदधति ।

**भुवनकोशः**—( १०७-१०८ अ०; ११८-१२० अ० ) प्रायेण सर्वेषु पुराणेषु भुवनकोशप्रसंगोऽस्ति[2] । ग्रन्थान्तरेष्वपि विषयोऽयं दृश्यते[3] । आग्नेये भुवनकोशे तीर्थप्रसंगोऽपि प्रसंगतः कृत इत्यस्य वैलक्षण्यं पुराणान्तरतः । भुवनकोशेन सह ज्योतिष्प्रचारोऽपि प्रायेण विवृतो भवतीति ज्ञेयम् ।

सर्गादिप्रतिपादके पुराणे भुवनकोशस्य कथं संनिवेश इति प्रश्ने

---

१. न केवलं पुराणे, प्रत्युत शास्त्रान्तरेऽपि इदमेव मतं स्वीकृतम् । उक्तं च योगभाष्ये—"सप्तसमुद्रवेष्टिताः वलयाकृतयो लोकालोकपर्वतपरीवाराः पञ्चाशद्योजनकोटिपरिसंख्याताः"...( ३।२६ ) । एतत्परिमाणविषये नीलकण्ठो बभाषे—"यत्तु पुराणे पञ्चाशत्कोटियोजनप्रमाणमित्युक्तं तदपि 'अचिन्त्याः खलु ये भावा न तांस्तर्केण साधयेत्' इत्यनेनैव प्रत्युक्तम् । अव्यवस्थितत्वा-न्मतानाम् अनिर्वचनीयवाद एव शरणीकरणीय इत्येव वरम् । यद्वा सर्वत्र यत् प्रमाणं दृष्टं तद्विंशांशेन तद् बोध्यम्, तेन पञ्चाशत्कोटिस्थाने सार्धकोटिद्वय-विस्तारा भूमिः" ( भीष्मपर्वटीका )।

२. कूर्म० १।४३-५० अ०; गरुड० १।५४-५७ अ०; पद्म० १।३-६ अ०; ब्रह्म० १८-२८ अ०; भागवत० ५।१६-२० अ०; मत्स्य० ११३-११८ अ०; मार्क० ५४-६० अ०; लिङ्ग० १।४६-६१ अ०; वराह० ७४-८६ अ०; वायु० ३४-५० अ०; विष्णु० २।२-७ अ०; शिवपु० उमा० १७-१८; देवीभाग० ८।१-३ अ० ।

३. योगभाष्य ३।२६, सिद्धान्तशिरोमणि-गोलाध्याय, भीष्मपर्व ४-१२ अ० ।

कुमारिलः समाधत्ते—"यत्तु पृथिवीविभागकथनं तद् धर्माधर्मसाधन-फलोपभोगप्रदेशविवेकाय किञ्चिद् दर्शनपूर्वकं किञ्चिद् वेदमूलम्। वंशानुक्रमणमपि ब्राह्मण-क्षत्रियजातिगोत्रज्ञानार्थं दर्शनस्मरणमूलम्। देशकालपरिमाणमपि लोकज्योतिःशास्त्रव्यवहारसिद्ध्यर्थं दर्शन-गणितसंप्रदायानुमानपूर्वकम्" ( तन्त्रवार्त्तिक १।३।१।२ )।

११८तमाध्याये भारतवर्षस्य विशेषतो वर्णनमुक्तम्। वायौ ( ४५ अ० ), मात्स्ये ( ११४ अ० ), मार्कण्डेये ( ५७ अ० ) भागवते ( ५।१७ अ०; ५।१९ अ० ) च भारतं विशदरूपेण वर्णितम्। अधस्तान् निर्दिष्टेषु ग्रन्थस्थलेष्वपि भारतवर्षवर्णनं तदन्तर्गत-नदीपर्वतादीनां वर्णनं द्रष्टव्यम् ( कूर्म० १।४७ अ०; ब्रह्म० १९ अ०; मार्क० ५८ अ०; विष्णु० २।३ अ०; रामायण किष्किन्धा० ४०–४६ स०; सभान्तर्गत-दिग्विजयपर्व २५-३२; अन्येष्वपि पर्वसु अन्तराऽन्तरा )।

भुवनकोशे पृथिवीविभागभूताः सप्तद्वीपा एव प्राधान्येन वर्णिताः। सिद्धान्तशिरोमणिग्रन्थे द्वीपविवरणमतिसारवद् दृश्यते—

भूमेरर्धं क्षारसिन्धोरुदक्स्थं जम्बूद्वीपं प्राहुराचार्यवर्याः।
अर्धेऽन्यस्मिन् द्वीपषट्कस्य याम्ये क्षारक्षीराद्यम्बुधीनां निवेशः॥

शाकं ततः शाल्मलमत्र कौशं क्रौञ्चं च गोमेदकपुष्करे च।
द्वयोर्द्वयोरन्तरमेकमेकं समुद्रयोर्द्वीपमुदाहरन्ति॥

( शब्दकल्पद्रुमधृतसिद्धान्तशिरोमणिवचनम् )

प्लक्षद्वीपस्यैव नामान्तरं गोमेदकमिति विज्ञेयम्।

द्वीपविवरणान्ते अप्समुद्रसम्बन्धो विवृतः ( ११९।२४–२६ )। ततश्च लोकालोककथनम्, अण्डकटाहकथनं च। एतत् सर्वं वाय्वादि-पुराणेषु विशदरूपेणोक्तम्।

**पातालम्**—द्वीपवर्णनानन्तरं सप्तपातालानां वर्णनं कृतम् १२० तमेऽध्याये ( १२०।१–४ )। भूमिविशेषाः कृष्णपीतारुणादिवर्णयुक्ता एव पातालानि इत्यत्रोक्तम्। मतमिदं लैङ्गे, वैष्णवे, अन्यत्र च दृश्यते। भुवोऽधो नरका इत्यत्रैवोक्तम् ( १२०।५ )।

एतदनन्तरम् १२०तमेऽध्याये सूर्यस्य, ग्रहादीनां च प्रचारः समासतो वर्णितः।

तीर्थम्—१०९तमेऽध्याये तीर्थसूची प्रदत्ता। देवविशेषसंबद्धाः सूच्यः पुराणान्तरेष्वपि उपलभ्यन्ते, यथा—पितृतीर्थगणना ( मत्स्य० २२ अ० ), देवीपीठगणना ( मत्स्य० १३ अ० ), ब्रह्मतीर्थगणना ( प्रभासक्षेत्र १०५ अ० ); सामान्यतीर्थसूच्यश्च बहुत्र दृश्यन्त इति ज्ञेयम् । ( ब्रह्म० २५ अ० ) ।

तीर्थगणना खलु अत्यन्तं प्राचीना[१] । दृश्यते खलु विष्णुधर्मसूत्रे ( ८५ तमेऽध्याये ) काचिद् गणना । यत्र पञ्चाशतोऽप्यधिकानि नामानि गण्यन्ते । भारतीयजीवने तीर्थस्य महिमा खलु सुप्रतिष्ठः । भौगोलिकैतिहासिकदृष्ट्या तीर्थविवरणं साभिप्रायं प्रतीयते । तीर्थज्ञानं धर्मदृष्ट्या लोकदृष्ट्या संस्कृतिदृष्ट्याऽपि आवश्यकमिति अनुसन्धातृणां मतम्[२] ।

---

१. अष्टषष्टितीर्थगणनाऽपि प्रसिद्धाऽसीदिति विज्ञायते । दृश्यतां नागर० १०५।२८–४०; १०६।५–२०; प्रभास० १३३।११–२८; मत्स्य० १८१ अ०; इति च ।

२. The creation of Tirthas was a positive technique in the process of 'land-taking' or land settlement by the pioneers of race. The fore-fathers who first made the land their own Created a Tirtha and gave it a name after some Risi or hoary ancestor or Deva who performed his Tapas there. Such region or spot is made holy in the minds of the people and binds them perpetually to the land. From this point of view the geography of India is a revelation and it would be difficult to find a beauty spot or a spot with natural scenery, a mountain peak, a river. stream, reservoir of water or waterfall where the footsteps of the pioneers and forebears had not reached and which they had not deified as a Tirtha ( Matsya Purana–A Study pp. 115–116 ).

गङ्गामाहात्म्यम् (११० अ०)—पाद्मे (५।६० अ०; १।३३ अ०), नारदीये ( २।३८–४५ अ० ) च गङ्गामाहात्म्यं दृश्यते। पुराणगते काशीमाहात्म्ये प्रयागमाहात्म्ये चापि गङ्गामहिमा प्रतिपादितोऽशतः।

प्रयागमाहात्म्यम्—( ११० अ० )—पुराणान्तरेष्वपि विषयोऽयं दृश्यते (पद्म० १।४०–४९ अ०; मत्स्य० १०३–११२ अ०; कूर्म० १।३६–३९ अ० ) अत्रत्या बहवः श्लोकाः प्रायेण समाना इति दृश्यते। वनपर्वण्यपि ( ८५–८७ ) प्रयागविवरणमस्ति।

वाराणसीमाहात्म्यम् (११२ अ०)—पुराणान्तरेष्वपि वाराणसी-माहात्म्यं ( काशीमाहात्म्यं वा ) लभ्यते ( पद्म० १।३३–३७ अ०; नारदीय० २।४८–५१ अ० ; मत्स्य० १८२–१८५ अ०; लिङ्ग० १।९२ अ०; कूर्म० १।३१–३५ अ० )। स्कन्दपुराणीयकाशीखण्डे प्रतिपादितं काशीमाहात्म्यम्।

नर्मदामाहात्म्यम् ( ११३ अ० )—पुराणान्तरेष्वपि नर्मदामहिमा प्रतिपादितः ( पद्म० १।१३–२३ अ०; मत्स्य० १८६–१९४ अ०; कूर्म० २।४०–४२ अ० )।

गयामाहात्म्यम् (११४–११६ अ०)—पुराणान्तरेष्वपि विषयोऽयं प्रतिपादितः ( वायु० १०५–११२ अ०; नारदीय० २।४४–४० अ० )।

अत्र गयासुरकथोल्लिखिता ( ११५।५४–६३ )। नारदीये ( २।४४। २६–५० ), गरुडेऽपि ( १।८४।३४–४३ ) च कथेयं दृश्यते। गया खलु खीष्टजन्मनः पूर्वमेव पुण्यस्थानरूपेण संमानिताऽसीत्। एतत्स्थान-पवित्रताज्ञापनार्थमेव गयासुरकथा कल्पितेति काणेमहोदयानां मतम्[1]।

---

१. To my mind it appears thet Gaya had become a famous पितृतीर्थ centuries before Christ and that the legend of Gayasura is a post facto attempt to account for the sanctity of the place and the numerous shrines and holy places that had sprung up round Gaya ( Hist. of Dharmasastra vol. iv, p. 660 ).

अन्येऽपि विद्वांसो गयासुरकथां विवेचितवन्त इति अत्रैव दर्शितम्, [ तथा हि—वरुआमहोदयः ( Gaya and Buddha Gaya ग्रन्थे ), राजेन्द्रलालमित्रमहोदयः Bodhgaya ग्रन्थे ), O. Malley महोदयः ( एतद्विषयको निबन्धः, J. A. S. B. Vol. LXII, Part 3, 1904 ) ].

## ( ८ ) ऐतिहासिक-सांस्कृतिक विषयाः

चरितम्, आख्यानादिकं चाधिकृत्यात्र किमपि विचार्यते समासेन। अत्र विशिष्टान्येव चरितादीनि विवेचयिष्यन्ते।

**अवतारः**—मत्स्यादीन् अवतारानधिकृत्य विशदं विवरणं प्रदत्त-माग्नेये ( २-१६ अ० )। यद्यप्यत्र कृष्णोऽवतारत्वेन स्वीकृतः ( महाभारतस्य हरिवंशस्य च सारोऽपि प्रदत्तः ), तथापि ४९।६ स्थले बलराम एवाष्टमावतारत्वेन संमानित इति दृश्यते। पुराणप्रवक्तृभेद एवास्य मतभेदस्य कारणमिति स्वीकरणीयम्।

संक्षेपभागवतामृते सनातनगोस्वामिकृते 'अवतार'विषये विपुलो विचारो विद्यते[1]। अत्र वैष्णवसंप्रदायदृष्ट्या वर्गीकरणं स्वरूपनिर्धारणं च कृतम्।

अवतारप्रतिमालक्षणं ४९तमेऽध्याय उक्तम्।

**मत्स्यावतारः** ( २ अ० )—अत्र मनुवैवस्वतकथा, वेदहर्तृहय-ग्रीवदानववधकथा च वर्णिता। मनुवैवस्वतकथा चान्यत्र दृश्यते—भाग० १।३।१५; २।७।१२; ८।२४ अ०; मत्स्य० १ अ०।

**हयग्रीववधकथा**—भाग० ११।४।१७; ५।१८।६; पद्म० ४।२२।२३; ६।२५७।१-३१; रेवा० ९ अ०; वराह० १५।१०; १।५; ११३।२०; मत्स्य०

१. महाभारते पुराणे च अवतारगणना सर्वत्र नैकरूपा। क्वचिद् हंसनाम पठ्यते, क्वचिन् मत्स्यनाम न पठ्यते, क्वचिद् बुद्धनाम नास्ति, क्वचित् कृष्णस्थले बलरामनाम दृश्यते। किमत्र कारणमिति ग्रन्थान्तरे विशदी-करिष्यते।

५३।५-७; वस्त्रापथ० १८।५४ इत्यत्रोक्ता। पुराणोक्तासु कथासु सर्वत्र किमपि वैलक्षण्यं वर्तत इति न विस्मरणीयम्।

मत्स्यावतारकथाया मूलं खलु शतपथब्राह्मणम् (१।८।१।१)। ब्राह्मणे मनुरित्येवोक्तम्। कृतमालेति नद्या नाम ब्राह्मणे नास्ति, आग्नेये (२।४) भागवते (८।२४।१२) च विद्यते। अग्निपुराणगतं विवरणं खलु भागवतप्रतिष्ठम्। कृतमालेति नाम भागवतकर्तुः दाक्षिणात्यप्रदेशभवत्वं सूचयतीति इतिवृत्तविदः। एतद्विषये अमरनाथ-रायकृतो निबन्धः (I. H. Q. VIII. pp. 49–53), जे० एन० बनर्जीकृतो निबन्धः (I. H. Q. XXVII. pp. 138–143) च द्रष्टव्यौ[1]।

कूर्मः (३ अ०)—अत्र समुद्रमन्थनकथोक्ता। कथेयं पुराणान्तरेष्वपि (कूर्म० १।१६।७७-७८)।

यद्यपि वेदे कूर्मप्रसंगोऽस्ति (शतपथब्रा० ७।५।१।५; तै० आ० १।२३।१), तथापि वैदिकेन विवरणेन सह न पुराणगतस्य विवरणस्य कश्चिदपि संबन्धोऽवलोक्यते।

वराहः (४।१-३)—अत्र वराहकृतं हिरण्याक्षहननं वर्णितम्। अन्यत्र च तृतीये देवासुरसंग्रामे हिरण्याक्षहननम् पृथ्वीधारणं च वर्णितम् (२७६।१२; २७६।१५)। हिरण्याक्षवधोऽपि बहुश उक्तं पुराणेषु। वराहावतारविषये तैत्तिरीया संहिता (७।१।५।१), तैत्तिरीयं ब्राह्मणं (१।१।६), शतपथब्राह्मणं (१४।१।२।११) च द्रष्टव्यम्।

पृथिव्युद्धरणमपि बहुत्रोक्तम्। अस्मिन् प्रसंगे वराहः खलु यज्ञवराह इत्युच्यते क्वचित्। स एष प्रसंगोऽन्यत्रापि उक्तः (ब्रह्म० २१३।३२-३९; वायु० ६।१६-२३; ब्रह्माण्ड० १।५।१६-२३; मत्स्य० २४८।६६७-४; भागवत० ३।१३।३५-३९; विष्णु० १।४।३२-३६)।

---

१. द्रष्टव्यः J. N. Farquharr कृतः An Outline of the Religious literature of India नामधेयो ग्रन्थः (pp. 232–233).

**नरसिंहः** ( ४।३।५ )। अत्र नरसिंहकृतो हिरण्यकशिपुवध उक्तः। एतद्विषये २७६।१०, २७६।१३ स्थले अपि द्रष्टव्ये।

**वामनस्य** ( ४।५।१३ ), **परशुरामस्य** ( ४।१२-२० ) च चरितमत्र समासत उक्तम्। पुराणेषु एषां कर्माणि ईदृशान्येव कीर्त्यन्ते। वेदेऽपि अतिसंक्षेपेणैषां कथा प्रोक्ता।

रामविषये रामायणविषये च प्रागेवोक्तम्।

**बुद्धः**—बुद्धविषये पुराणेषु भूयांसि वचनानि उपलभ्यन्ते। एतादृशानां वचनानां संकलनं खलु मत्कृते 'इतिहास-पुराण का अनुशीलन' नामधेये हिन्दीग्रन्थे ( पृ० २८०-२८६ ) द्रष्टव्यम्।

**कल्किः** ( १५।८-१० )—दशमावताररूपेण कलिकालान्ते भवः कल्किः ( कल्की वा ) पुराणेषु बहुधोक्तः। काशीप्रसादजायसवाल-महोदयेन ( Indian Antiquary Vol. ILVI ), पाठकमहोदयेन ( Brahmavidya Vol. I ) च ऐतिहासिकदृष्ट्या कल्किप्रसङ्गो विचारितः। कलियुगविषये पुराणेषु बहूक्तम् ( भाग० १२ २ अ०; ब्रह्माण्ड० १।३१ अ०; विष्णु० ६।१-२ अ०; ब्रह्म० २२९-२३० अ०; वन० १८८ अ० )[1]।

**भरतः**—स्वायंभुववंशीय-भरतस्य चरितं १०७तमेऽध्याये उक्तम्। उक्तमत्र "स योगी योगप्रस्थाने वक्ष्ये तच्चरितं पुनः" इति (१०७।१३)। योगिनो भरतस्य चरितं पुनः ३८०तमेऽध्याये प्रोक्तमिति दृश्यते। एतेन उभययोरध्याययोः प्रणेता एक एवेति ज्ञायते। किमर्थं च एकैव कथा विभज्योक्ता—इति चिन्तनीयं विद्वद्भिः।

**ऋभु-निदाघ-कथा** (३८०।४६-६७)—विष्णुपुराणेऽपि (२।१५-१६ अ०) कथेयमस्ति (ऋतुपाठोऽशुद्धः)। ब्रह्मपुत्र ऋभुः पुलस्त्यतनयं निदाघमात्मज्ञानमुपदिदेश—इत्यत्रोक्तम्।

---

१. कासांचिद् मत्स्यकूर्मादिकथानां यत् तात्त्विकं रहस्यं तद् ग्रन्थान्तरे प्रतिपादयिष्यते। मत्स्यादयो न ऐतिहासिकव्यक्तिविशेषा इति विज्ञेयम्।

**खाण्डिक्यजनक-केशिध्वजसंवादः** ( ३७९।१५ ) । इदमपि विष्णुपुराणे ( ६।५-७ अ० ) नारदीये ( १।४६-४७ अ० ) च दृश्यते ।

**कपिलः**—अनेन सगरपुत्रा दग्धाः—"खनन्तः पृथिवीं दग्धाः कपिलेनाथ सागराः" ( २७३।२९ ) । कोऽयं कपिल इति दुरवधारणोऽयं प्रश्नः । उद्योगपर्वणि पठ्यते—

अत्र चक्रधनुर्नाम सूर्याज् जातो महानृषिः ।
विदुर्यं कपिलं देवं येनार्ताः सगरात्मजाः ॥

( १०९।१७-१८ )

चक्रधनुः खलु तपोधर्मादिसादृश्यात् कपिलनाम्ना प्रसिद्धोऽभूत् । अयं सांख्यप्रवक्तुरन्य इत्यपि विज्ञायते ।

शंकराचार्योऽपि सांख्यप्रवक्तुः कपिलात् सगरपुत्रध्वंसकृतः कपिलस्य पृथक्त्वमेव स्वीचकार, यथाह सः—"अन्यस्य च कपिलस्य सगरपुत्राणां प्रतप्तुः वासुदेवनाम्नः स्मरणात्" ( शारीरक० २।१।१ ) । सगरपुत्रध्वंसकः कपिलः खलु वासुदेवनामेति न इतिहासपुराणे दृष्टमिति विज्ञेयम् ।

**सनन्दनादयः** ( ३७९।२८ )—सनन्दनादयः खलु ब्रह्मभावभावनया युता इत्युक्तम् । अत्र सनक-सनातन-सनन्दन-सनत्कुमारा एव ग्राह्याः । सनन्दनादीनां ब्रह्मविद्यावेत्तृत्वमितिहासपुराणे प्रसिद्धमेव—

सनः सनत्सुजातश्च सनकः ससनन्दनः ।
सनत्कुमारः कपिलः सप्तमश्च सनातनः ॥७२॥

सप्तैते मानसाः प्रोक्ता ऋषयो ब्रह्मणः सुताः ।
स्वयमागतविज्ञाना निवृत्तिं धर्ममास्थिताः ॥७३॥

एते योगविदो मुख्याः सांख्यज्ञानविशारदाः ।
आचार्या धर्मशास्त्रेषु मोक्षधर्मप्रवर्तकाः ॥७४॥

( शान्ति० ३४०।७२-७४ )

नारदपुराणस्य पूर्वभागे चत्वारः पादाः सन्ति, येषु यथाक्रमम् सनक-सनन्दन-सनत्कुमार-सनातना नारदं प्रति आत्मज्ञानं ख्यापयन्ति ।

नारदीयगतमिदं प्रकरणं महाभारतप्रतिष्ठितमिति प्रतिपादितं V. M. Bedekar महोदयेन ( Purana, vol. v. pp. 280–304 ) ।

## ( ९ ) प्रकीर्णविषयाः

( क ) **मरुन्नाम**–२१६तमेऽध्याये ४९ मरुन्नामान्युक्तानि 'एकज्योति'-रादीनि (२१६।२८–३४)। मरुतामीदृशानि नामानि न पुराणान्तरे दृश्यन्ते। वामनपुराणे सप्तमन्वन्तरगतानाम् एकोनपञ्चाशद् मरुतां नामानि विभज्य उक्तानि ( ७१–७२ अ० )। अत्र मरीचेर्नाम न दृश्यते, यद्यपि गीतायामुक्तम्—"मरीचिर्मरुतामस्मि" ( १०।२१ )। किमत्र पुराणपाठो भ्रष्ट उत नामगणनायां मतभेदोऽस्तीति विचारणीयम् ( एकादशरुद्रनामगणनायां मतान्तराणि दृश्यन्त इति न विस्मरणीयम् )।

अस्मिन्नध्याये प्रजापतीनाम्, देवपत्नीनाम्, पितॄणाम्, मनूनाम्, आदित्यानाम्, गन्धर्वाणाम्, अप्सरसाम्, यक्षानाम्, नागानाम्, राज्ञाम्, पर्वतानाम्, विद्यानाम्, तीर्थादीनां च नामानि सुष्ठु संकलितानि।

( ख ) **नक्षत्रनाम**–अश्विनीभरणीकृत्तिकादीनां सप्तविंशतिनक्षत्राणां संक्षिप्तानि नामानि दर्शितानि ( १३६।७–८ )—अ०–भ–कृ–रो–मृ–आ–पु–इत्यादीनि। एतादृशी पद्धतिर्ऋग्ज्योतिषेऽपि दृश्यते। अत्र जौ ( अश्विनी ), द्रा ( आर्द्रा ), गः ( पूर्वफाल्गुनी ), खे ( विशाखा ), श्वे ( उत्तराषाढा ), हिः ( पूर्वाभाद्रपदा ) इत्येवंरूपेण कयाचिदनिर्ज्ञातरूपया पद्धत्या नक्षत्रनामानि संक्षिप्तानि कृतानि। ज्योतिषशास्त्रे बहुविधानि संक्षिप्तनामानि सन्तीति विज्ञेयम्।

( ग ) **उशनःश्लोकः**—"श्लोकं पपाठ उशनाः" इत्युक्त्वा (१।८४) 'अहोऽस्य...' श्लोक उद्धृतः (१८।५)[१]। पुराणान्तरेऽपि ध्रुवविषयक एतादृशः श्लोको दृश्यते ( विष्णु० १।१२।९७–९८ )। एतेन प्रतीयते ध्रुवविषये किमपि काव्यं विरचितमुशनसा।

---

१. एतादृशश्चरितवर्णनात्मकः श्लोकोऽन्यत्रापि दृष्टः—"हिरण्यकशिपुर्दैत्यः श्लोकैर्गीतः पुरातनैः..." ( वायु० ६७।६५ )।

( घ ) **भगवान्** – भगवच्छब्दविषय उक्तम्–"एवं हरौ हि भगवाञ्शब्दोऽन्यत्रोपचारतः" ( ३७९।१२ ) मतमिदं साध्विति प्रतिभाति। भागवतगतं "वदन्ति तत्...ब्रह्मेति परमात्मेति भगवानिति शब्द्यते" इति (१२।११) पद्यमपि इदमेव तत्त्वं बोधयति[१]।

( ङ ) **भाषोल्लेखः** – आग्नेये भाषाणां नाम क्वचिदुपलभ्यते—"संस्कृतप्राकृतकविः" इति (३१९।११)। भाषोल्लेखः पुराणेष्वन्तराऽन्तरा दृश्यते—"देशभाषाविभाषिण्यो रामामण्डलमध्यतः" ( प्रभासक्षेत्र ), "नानाभाषासु कोविदाः" ( काशी० ९।४ ), "संस्कृतं प्राकृतं चैवापभ्रंशं भूतभाषितम्" ( प्रभासक्षेत्र० १४७।५१ ), "न म्लेच्छभाषणं शिक्षेत्" ( कूर्म० २।१६।६४ ), "प्राकृतं म्लेच्छभाषितम्। न श्रोतव्यं द्विजेनैतद् अधो नयति तद् द्विजम्" ( गरुड० १।९८।१७ ), "संस्कृतैः प्राकृतैः स्तोत्रैः" ( द्वारका० ६।३३ ) इति च। पुराणोक्तभाषानिर्देशमाश्रित्यान्यत्र विचारयिष्यते।

( च ) **महाबोधितरुः** ( ११५।३७ )—गयाश्राद्धप्रसङ्गेऽस्य नाम धृतम्। वायवीयेऽपि ( १११।२७–२९ ) तरुरयं स्तुतोऽस्मिन् प्रसङ्गे। अन्येऽपि केचन श्लोका एतद्विषये प्रसिद्धाः[२]। सिद्धार्थो बुद्धोऽश्वत्थमूले तपश्चचार, योगर्द्धिं च लेभे– इत्येव वृक्षस्यास्य महत्ताया हेतुरित्यनुमीयते।

---

१. यथा खलु भगवच्छब्दो विष्णौ हरौ प्रयुज्यते, तथा ईश्वरशब्दः शिवे। शैवसंप्रदायीयग्रन्थेषु ईश्वरशब्दो बहुधा प्रयुज्यते शिवमभिलक्ष्य। आगमप्रामाण्यग्रन्थेऽपि मतमिदमुपदर्शितम्—"सर्वज्ञेश्वरशब्दौ च नर्ते देवात् पिनाकिनः। उत्पत्तिशक्त्या वर्तेते सत्यप्यन्यत्र तद्वति" ( पृ० २५ )।

२. It may be noted that three verses ( Vayu 111. 27–59 ) addressed to Mahabodhitaru do not occur in Tristhalisetu p. 361. which gives two other verses instead viz. चलद्दलाय वृक्षाय सर्वदा चलयिष्णवे। बोधितत्त्वाय यज्ञाय अश्वत्थाय नमो नमः। एकादशोऽसि रुद्राणां वसूनामष्टमस्तथा। नारायणोऽसि देवानां वृक्षराजोऽसि पिप्पल। The Tristhalisetu remarks that even in some mss. even these two are not to be found.

( छ ) **मारिषाकथारहस्यम्** ( १८।२३-२८ )—कथेयमाधिदैविक-रहस्यं प्रकटयति। दर्शितं च वृक्षकन्याया मारिषायाः तात्त्विकं स्वरूपं नीलकण्ठेन—"वृक्षान् शोषयता वायुना तेषां सारांशो यथा स्वकारणे सौरतेजसि प्रक्षिप्तः, एवं पार्थिवः सारांशः अम्मये सोमे प्रक्षिप्तः। एवं कन्यारूपं वार्क्ष तेजः सोमस्य गर्भे धृतमिति युक्तम्" इति ( हरिवंश० १।२।४१ )।

( ज ) **नाडी**—देवताधिवासनविधिप्रसङ्ग उक्तम्—

हृत्पुण्डरीके संन्यस्य यकारं सूर्यदैवतम्।
द्वासप्ततिसहस्राणि हृदयादभिनिःसृताः॥

( ५९।२६ )

यद्यप्यत्र नाडीशब्दो न प्रयुक्तस्तथापि श्लोकोऽयं नाडीसंख्यामेव लक्षयतीति निश्चप्रचम्। एतादृशी नाडीसंख्या श्रुतावपि कीर्तिता—"अत्रैतदेकशतं नाडीनां तासां शतं शतमेकैकस्या द्वासप्ततिर्द्वासप्ततिः प्रतिशाखा नाडीसहस्राणि भवन्ति आसु व्यानश्चरति" ( प्रश्न उप० ३।६ )। हृदयनिःसृता नाडीति भारते व्यास आह—"प्रस्थिता हृदयात् सर्वास्तिर्यगूर्ध्वमधस्तथा" इति।

( झ ) **चक्रम्**—अस्मिन्नेव प्रसङ्ग उक्तम्--

शुभं चक्रं द्वादशारं ह्युपरिष्टाद् विचिन्तयेत्।
त्रिनाभिचक्रं द्विनेमि स्वरैस्तच्च समन्वितम्॥

( ५९।४१-४२ )

अत्रार्थे इमौ मन्त्रौ द्रष्टव्यौ—

द्वादशारं नहि तज्जराय वर्वर्ति चक्रं परिद्यामृतस्य।
आपुत्रा अग्ने मिथुनासो अत्र सप्तशतानि विंशतिश्च तस्थुः॥

( ऋग्० १।१६४।११ )

द्वादशप्रधयश्चक्रमेकं त्रीणि नभ्यानि क उ तच्चिकेत।
तस्मिन् साकं त्रिशता नशङ्कवोऽर्पिता षष्टिर्न चलाचलासः॥

( ऋग्० १।१।६४।४८ )

( ञ ) **पुस्तकम्**— पुस्तकलेखनविषय उक्तम्—

पुस्तकानां प्रतिष्ठां च वक्ष्ये लिखनतद्विधिम् ।
स्वस्तिके मण्डलेऽभ्यर्च्य शरयन्त्रासने स्थितम् ॥१३॥
लेख्यं च लिखितं पुस्तं गुरुर्विद्यां हरिं यजेत् ।
यजमानो गुरुं विद्यां हरिं लिपिकृतं नरम् ॥१४॥
प्राङ्मुखः पद्मिनीं ध्यायेल् लिखित्वा श्लोकपञ्चकम् ।
रौप्यस्थमष्या हैम्या च लेखन्या नागराक्षरम् ॥१५॥
ब्राह्मणान् भोजयेच्छक्त्या शक्त्या दद्याच्च दक्षिणाम् ।
गुरुं विद्यां हरिं प्राच्यं पुराणादि लिखेन्नरः ॥१६॥
( ६३।१३-१६ )

पुराणान्तरेष्वपि लेखनचर्चाऽस्ति, तथाहि—

भविष्योत्तरपुराणे ( १।८ प्रकरणीयापरार्कटीकाधृते ) मषीनिर्माण-विषये इमे श्लोका उक्ताः—

"सौवर्णी लेखनी कार्या रौप्यं च मषिभाजनम् ।
दीपज्वालासमुद्भूतकज्जलेन मषी भवेत् ।
औदुम्बरामत्र पाणिघृष्टबोलरसान्विता ।"

शास्त्रविदे मष्यादिदानं कर्तव्यमित्याह नन्दिपुराणम्—

येऽपि पत्र-मषी-पात्रलेखनीसंपुटादिकम् ।
दद्युः शास्त्राभियुक्ताय तेऽपि विद्याप्रदायिनः ॥

( ट ) **मोहशास्त्रम्**—इन्द्रद्वेषिणो रजिपुत्रान् मोहयित्वा बृहस्पति-रिन्द्राय राज्यं ददौ इत्याख्यायिका २७४।१७-१९ इत्यत्रोक्ता । उक्तमत्र-"ग्रहशान्त्यादिविधिना गुरुरिन्द्राय तद् ददौ । मोहयित्वा रजिसुतान् आसंस्ते निजधर्मतः" इति ( २७४।१९ ) । अत्र 'मोहयित्वे'ति पदस्य किं तात्पर्यमिति ? पुराणान्तरेषु एतदाख्यानविषये 'वेदबाह्यः जिनधर्मः' ( मत्स्य० २४।४७ ), 'भ्रंशितमार्गः' ( ९।१७।१६ ), 'बुद्धिसंमोहः' ( वायु० ९२।९७, ब्रह्माण्ड० २।६७।१०२ ), बुद्धिमोहाभिभूतः, धर्मत्यागः, वेदवादपराङ्मुखः' ( विष्णु० ४।८।८ ), 'नास्तिवादः, असत्तर्क-शास्त्रम्' ( हरिवंश० १।२८।३०-३३ ) इत्येते शब्दाः प्रयुक्ताः । एभिः

शब्दैः 'चार्वाकमतसदृशं किमपि वेदविरोधिमतं' लक्ष्यत एव। एतच्छास्त्रमेव मोहकारणमिति। बौद्धो जैनो वा धर्मोऽत्र लक्षितो न वेति चिन्तनीयम्[1]।

**अग्निपुराणविषयाः**—अस्मिन् अग्निसंस्करणे येन क्रमेण विषयाः प्रतिपादितास्ते पुराण एवेत्थं निर्दिष्टाः ( अ० ३८३ )।

आग्नेये हि पुराणेऽस्मिन् सर्वविद्याः प्रदर्शिताः।
सर्वे मत्स्यावताराद्या गीता रामायणं त्विह ॥ ५२॥

हरिवंशो भारतं च नव सर्गाः प्रदर्शिताः।
आगमो वैष्णवो गीतः पूजा दीक्षा प्रतिष्ठया ॥ ५३॥

पवित्रारोहणादीनि प्रतिमालक्षणादिकम्।
प्रासादलक्षणाद्यं च मन्त्रा वै भुक्तिमुक्तिदाः ॥ ५४॥

शैवागमस्तदर्थश्च शाक्तेयः सौर एव च।
मण्डलानि च वास्तुश्च मन्त्राणि विविधानि च ॥ ५५॥

प्रतिसर्गश्चानुगीतो ब्रह्माण्डपरिमण्डलम्।
गीतो भुवनकोषश्च द्वीपवर्षादिनिम्नगाः ॥ ५६॥

गयागङ्गाप्रयागादि - तीर्थमाहात्म्यमीरितम्।
ज्योतिश्चक्रं ज्योतिषादि गीतो युद्धजयार्णवः ॥ ५७॥

---

१. It is thus not conclusive that either Buddhism or Jainism is referred to here. The greatest common measure is represented by 'a path opposed to the Vedic' and 'Indra doing something against those opposed to the Vedic'. This of course is a very ancient idea having widespread concurrence in Vedic literature, Samhita Brahmana and Upanisad—Indra giving away to Salavrkas the Yatis described as Arunmagha or Arunmukha. the last obscure term being interpreted in a variety of ways ( Further Gleanings from the Matsya Purana by Dr. V. Raghavan, Purana vol. iii. p. 323 ).

मन्वन्तरादयो गीता धर्मा वर्णादिकस्य च।
अशौचं द्रव्यशुद्धिश्च प्रायश्चित्तं प्रदर्शितम् ॥ ५८ ॥

राजधर्मा दानधर्मा व्रतानि विविधानि च।
व्यवहाराः शान्तयश्च ऋग्वेदादिविधानकम् ॥ ५९ ॥

सूर्यवंशः सोमवंशो धनुर्वेदश्च वैद्यकम्।
गान्धर्ववेदोऽर्थशास्त्रं मीमांसा न्यायविस्तरः ॥ ६० ॥

पुराणसंख्यामाहात्म्यं छन्दो व्याकरणं स्मृतम्।
अलंकारो निघण्टुश्च शिक्षा कल्प इहोदितः ॥ ६१ ॥

नैमित्तिको प्राकृतिको लय आत्यन्तिकः स्मृतः।
वेदान्तं ब्रह्मविज्ञानं योगो ह्यष्टाङ्ग ईरितः ॥ ६२ ॥

स्तोत्रं पुराणमाहात्म्यं विद्या ह्यष्टादश स्मृताः।
ऋग्वेदाद्याः परा ह्यत्र परा विद्याऽक्षरं परम् ॥ ६३ ॥

सप्रपञ्चं निष्प्रपञ्चं ब्रह्मणो रूपमीरितम्।
इदं पञ्चदशसाहस्रं शतकोटिप्रविस्तरम् ॥ ६४ ॥

अग्निपुराणगतैः विषयैः सहास्याः सूक्त्या महत्साम्यं लक्ष्यते। यानि च वैलक्षण्यानि तान्यत्र विचार्यन्ते—

( १ ) ५६तमे श्लोके 'प्रतिसर्गश्चानुगीत' इत्युक्तम्। ब्रह्माण्डपरिमण्डलं ( ५६तमः श्लोको द्रं० ) खलु १०७-१०८ तमाध्याययोः वर्णितम्। एतत् प्राक् प्रतिसर्गस्य ( प्रलयस्य ) कापि चर्चा न विद्यते। प्रतिष्ठा-दीक्षामूर्तिलक्षणादीन्येव वस्तून्यत्र प्रतिपादितानि। चन्द्रादीनां स्व-स्व-राज्येऽभिषेकस्तु ( प्रतिसर्गनामधेयः ) १९तमेऽध्याये उक्तः 'प्रतिसर्गोऽयमीरितः' ( १९।२९ ) स चाक्त एव। नेदं प्रकरणं 'प्रतिसर्गश्चानुगीतः' इति वचसा लक्षितं भवितुमर्हति। प्रलयप्रकरणं तु पुराणान्ते वर्तत एव। अतो गम्यते 'प्रतिसर्गश्चानुगीते'ति कथने पाठभ्रंशोऽस्ति। सम्यक् पाठस्तु ऊहनीयः।

( २ ) ६०तमे श्लोक उक्तम्—

सूर्यवंशः सोमवंशो धनुर्वेदश्च वैद्यकम्।
गान्धर्ववेदोऽर्थशास्त्रं मीमांसा न्यायविस्तरः ॥

सूर्य-सोमवंशौ २७३-२७८ अध्यायेषु प्रपञ्चितौ। धनुर्विद्या च २४९-२५२तमाध्यायेषूक्ता। वैद्यकं २७९-२९२तमाध्यायेषु। गान्धर्ववेदः खलु नात्र विवृतः। गान्धर्ववेदपदेन मुख्यतः गानविद्या गृह्यते। गानविद्या पुनर्लेशतोऽपि नोक्ताऽऽग्नेये। किम् प्रकरणमिदं लुप्तम् ?

अर्थशास्त्रपदेन यदि राजनीतिविद्योच्यते; तर्हि सा विद्याऽत्र प्रोक्ता ( २१८-२४२ अ० )। अर्थशास्त्रं खलु राजनीतिमभिधत्ते इति शिष्टपरम्परातो ज्ञायते। विज्ञानेश्वरेण मिताक्षरायाम् 'अर्थशास्त्रं राजनीतिलक्षणम्' इत्युक्तम् ( २।२१ )।

पूर्वमीमांसाशास्त्रं पुनः क्वापि नाभिहितम्। वेदान्तशास्त्रोक्तं ज्ञानं ३७७-३८० तमाध्यायेषु विवृतम्। विषयोऽयमस्यामेव सूचौ पृथङ् निर्दिष्टोऽपि ( वेदान्तं ब्रह्मविज्ञानम्...६२ श्लो० ), अतो गम्यते पूर्वोत्तरमीमांसाविवरणात्मका अध्याया अप्यत्र आसन्निति। तथैव 'न्यायविस्तरम्' अप्यत्र आसीदित्यत्रैवोक्तम्। अक्षपाद-कणादकृते शास्त्रे एव मुख्यतः न्यायपदेन उच्येते। क्वचिच्च सांख्यादीनि शास्त्राण्यपि। एतेषां शास्त्राणां विवरणमपि नात्रोपलभ्यते। योगविद्या क्वचिद् 'न्यायविस्तरपदेन' लक्षिता भवति। सेयं विद्याऽत्र प्रपञ्चिता ( ३७२-३७६ अ० )। अस्यां सूचौ योगस्य पृथङ् निर्देशोऽपि वर्तते ( योगो ह्यष्टाङ्ग ईरितः ६२ श्लो० )। अतो गम्यते अर्थशास्त्रवद् न्यायादयोऽपि पृथक् प्रपञ्चिता आसन्निति। किम् एतच्छास्त्रसंबद्धा अध्याया लुप्ता जाताः ?

(३) ६१तमे श्लोके दृश्यते—"अलंकारो निघण्टुश्च शिक्षा कल्प इहोदितः" इति। अलङ्काराणाम्, निघण्टोः ( कोशस्य ), शिक्षायाश्च प्रतिपादनमस्मिन् पुराणे दृश्यते। परन्तु कल्पस्य प्रतिपादनं नोपलभ्यते। कल्पशास्त्रे मन्त्रविनियोगश्चिन्त्यते, अतः 'अग्निगताश्चतुर्वेदविधानगता मन्त्रा एव अनेन कल्पपदेन लक्ष्यन्ते' इत्यप्यभिधातुं न शक्यते, ऋग्वेदादिविधानस्य पृथङ्निर्देशात् ( ५९ श्लोको द्र० )। किं विशिष्टं कल्पप्रकरणं लुप्तम् ?

(४) अग्निपुराणपरिमाणविषये प्रागुक्तम्—"द्वादशैव सहस्राणि" इति ( २७२।११ )। अस्मिन्नन्तिमेऽध्याये तु "इदं पञ्चदशसाहस्रम्" इत्युच्यते ( ३८३।६४ )। श्लोकपरिमाणभेदकारणं प्रागेव चिन्तितमस्माभिः।

[ ३ ]

गता खलु अग्निपुराणोक्तविषयचर्चा। इदानीम् अग्निपुराणभाषाम्, अग्निपुराणवाङ्मयम्, अग्निपुराणपाठं चाधिकृत्य किमपि विचार्यते।

**आग्नेयप्रयुक्तानि छन्दांसि**—सर्वत्र अनुष्टुप्छन्द एव प्रयुक्तम्। द्वित्रा एव श्लोका वृत्तान्तररचिताः, यथा—

"अगस्त्य एवं खननाद् धरित्रीम..."(२०६।१३)–श्लोकोऽयमुपजातिछन्दस्कः। "एको मुनिस्ताम्र..." ११५।४० इन्द्रवज्रायुतः। गायत्रीछन्दस्का मन्त्रा अपि क्वचिद् दृश्यन्ते (७१।६)। मन्त्रेषु गद्यसदृशा अंशा अपि सन्ति (६३।६)। यतो हीदं पुराणं विद्यासारमयमतः काव्यरचनाप्रवृत्तिर्नात्र अवलोक्यते, अतएव छन्दोवैचित्र्यं न कृतमिति विज्ञायते[१]।

**अग्निपुराणोक्ताः केचन विशिष्टाः प्रयोगाः**—अथेह कानपि विशिष्टान् शब्दानवलम्ब्य शब्दशास्त्रादीनाश्रित्य विचार्यते—

(१) **अन्तर्धिः** "पृथोः पुत्रौ...अन्तर्धिपालितौ" इत्युक्तम् (२८।१९)। अत्रैवोक्तम्—"शिखण्डिनी हविर्धानमन्तर्धानाद् व्यजायत" इति।

---

१. The poetry of the Puranas exhibits three different tunes in the use of metres. The earlier Puranas do not have a large number of them, while the later ones show a tendency to overemphasise the variety. The Puranas of more recent compilation have fallen back again on the Sloka metre paying no heed to the effect which the variety of metres has on the mind of the reader. Hence the later Puranas of encyclcpaedic nature like the Agni, Garuda, Markandeya. Brihannaradiya, Brihaddharma and Brahmavaivarta have to some extent ignored the value of the fancy metres as a means to literary accomplishment ( Metres in the Harivansa Purana by Kumari Vina Pande, Purana, vol ii. p. 187 ).

अत्रान्तर्धिरेवान्तर्धान इति गम्यते। पुराणे नाम्नां पर्यायप्रयोगोऽन्तराऽन्तरा दृश्यते, यथा—य एव रुक्मी स एव रुक्मवानित्युच्यते, इन्द्रप्रस्थः शक्रप्रस्थो हरिप्रस्थो वा उच्यते। य एवारिमर्दनः, स एव शत्रुमर्दन इति। पिप्पलर्षि एवं पिप्पलाशन इति। एव हिरण्याक्षोऽपि हिरण्यनयन इत्युच्यते। अनयैव दृष्ट्या अग्निवेशनामाऽयुर्वेदप्रवक्ता हुताशवेशपदवाच्यो भवति[1]।

( २ ) **प्राचीनबर्हिषः**—"सवर्णाधत्त सामुद्री दश प्राचीनबर्हिषः" ( १८।२२ ) इत्यत्र शङ्केयं जागर्ति—प्राचीनबर्हिषः पुत्राः दश, अतः 'प्राचीनबर्हिषाः' इत्येव प्रयोगः करणीयः, कथं 'प्राचीनबर्हिषः' इति ? अपत्यप्रत्यये कृते सति, प्रथमाबहुवचने 'प्राचीनबर्हिषाः' इत्येव स्यात् ? अत्र 'तद्राजस्ये'ति बहुत्वे तद्धितस्य लुगिति बभाषे नीलकण्ठः ( हरिवंश० १।२।४० )।

( ३ ) **सर्वतीर्थम्**—"मुण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधिः" ( ११५।७ ) इत्यत्र सर्वतीर्थेष्वेतिपदेन प्रयाग एव लक्षितो भवतीति केचन मन्यन्ते। स्कन्दपुराणे 'मुण्डनम्' इत्यादिकं वचनमस्ति। एतद्विषये तीर्थचिन्तामणौ वाचस्पतिः सर्वतीर्थपदस्य प्रयागवाचकत्वमभ्युपगतवान् ( पृ० १६-१७ )। मतमिदं युक्तं न वेति सुधियो विभावयन्तु।

(४) **अर्धोदकम्**—आग्नेय उक्तम्—"अर्धोदके तु जाह्नव्या म्रियतेऽनशनेन यः" इति (तीर्थचिन्तामणि पृ० २६३ धृतं वचनम्; इदं लुप्ताग्नेयपुराणवचनमिति प्रतिभाति)। किमिदमर्धोदकमिति ? आह वाचस्पतिः—"अर्धोदकं चरणान् नाभिपर्यन्तमुदकम्" इति ( तीर्थचिन्तामणि पृ० २६३ )।

(५) **अगस्त्यः=अगस्तिः**—२०६तमाध्याये अगस्त्यः अगस्तिश्चेति शब्दद्वयमेकस्मिन्नेवर्षौ प्रयुक्तमिति दृश्यते। य एव अगस्त्यः स एव अगस्तिरिति कोशवचनतः सिध्यति। दृश्यते च काशकृत्स्नव्याकरणे सूत्रम्—'पुल्यगिभ्यामस्त्योऽस्तिश्च' इति। अस्य सूत्रस्यायमर्थो ज्ञायते यत् पुलि-अगि-धातुभ्यां अस्त्यः अस्तिश्च प्रत्ययौ भवतः, ततश्च यथा

१. पुराणप्रयुक्तव्यक्तिनामविषये बहवश्च समस्याः। एतद्विषये 'इतिहासपुराण का अनुशीलन'नामा मत्कृतो ग्रन्थो द्रष्टव्यः ( पृ० ८-१३ )।

पुलस्त्यः पुलस्तिश्च समार्थौ सिद्धौ तथैव अगस्त्यः अगस्तिश्च[1]। पुलस्त्यमभिलक्ष्य पुलस्तिशब्द इतिहासपुराणे प्रयुक्तः। तथैव विन्ध्याद्रिनमनकारिणि अगस्त्यमभिलक्ष्य अगस्तिशब्दः पुराणेषु दृश्यते ( काशीखण्ड ५।६० )। बावर ( Bower ) हस्तलेखसंग्रहे अगस्त्यकृतौषधनामप्रसंगे 'अगस्तिहरीतक्यवलेहः अगस्तिरसायने' च उक्ते, अतो गम्यत आयुर्वेदवाङ्मयेऽपि अगस्तिरेवागस्त्यरूपेण स्वीकृतः। एतादृशं नामवैचित्र्यं वेदेष्वपि। य एव उद्दालकः स एव उद्दालकिरिति शंकर उवाच ( कठभाष्य १।१।११ )[2]।

(६) पितृपैतामहः (२२०।१६)—यद्यप्यत्र उत्तरपदवृद्धये किमपि शास्त्रानुशासनं न लभ्यते, तथापि 'गुरुलाघावादि' पदवदत्रापि समाधानमन्वेष्टव्यम्, यथोक्तम्—गुरुलघ्वादेरुत्तरपदस्येति।

(७–८) पितृमातरौ ( १२६।३६ ) मातृपितृत्यागः (१६८।३९) अत्रानङ्ऋतो द्वन्द्वे ( पा० ६।३।२५ ) इति सूत्रेण कथं नात्वमिति? दृश्यते च 'मातापितृसहस्राणि', इति भारते प्रयोगः ( १८।५।६० ) 'मातापितृजा निवर्तन्ते' इति सांख्यकारिकायाम् ( ३९ कारिका )। कथं वा पितृशब्दस्य पूर्वनिपातो गौरवाधिक्यान्मातुरित्यपि प्रश्नो भवितुमर्हति अस्माभिर्मन्यते यद् आनङः पूर्वनिपातस्य च प्रयोगोऽनित्य इति, तथैव पूर्वाचार्यप्रयोगेषु दर्शनात्—"शास्त्रं चानतिशङ्क्यं मातृपितृवचनादपि प्रमाणतरम्" ( शाबरभाष्य ), "मातृपितृसहस्रम्" ( शंकरकृतकठभाष्य २।१।१५ ), "पितृमातृतः" ( नारदस्मृति, स्त्रीपुंसप्रकरण पृ० १०८ ), "मातृपितृनिमित्तकः" ( बौधायनगृह्यशेषसूत्र २।६।१–१० ); "पितृ–मातृ–पति–भ्रातृ..." ( कात्यायनस्मृतिवाक्यं स्मृतिचन्द्रिका २।२८१ धृतम् ), "भ्रातृ–मातृ–पितृ–प्राप्तम्" ( मनु० ९।१९४ ), पितृ-मातृ-भयावहः ( आदिपर्व ), पितृमातृतः ( विष्णुपुराण )।

---

१. "अगस्तिः स्यादगस्त्यश्च" ( द्विरूपकोश २६ ), "अगस्त्योऽगस्तिरेव च" ( शब्दभेदप्रकाशः )। वाचस्पत्यभिधाने तारानाथ आह—"अगस्तिः अगस्त्यनामके मुनौ"। मेदिनीकोशेऽपि कुम्भयोनिमृषिमभिलक्ष्य अगस्तिशब्दः दर्शितः—"अगस्तिः स्यात् कुम्भयोनौ" इति।

२. द्र० 'महर्षि अगस्ति पर कुछ निवेदन'नामधेयो निबन्धः ( सिद्धान्त वर्ष १४।१७–१८ )।

(९) दत्तः ( २७५।५ )। अत्र दत्तात्रेयार्थे दत्तशब्दः, यथा सत्यभामार्थे भामा वा सत्या वा। एतादृशेषु संक्षिप्तनामसु क पूर्वार्धः प्रयोक्तव्यः क उत्तरार्ध इत्यत्र लोक एव नियामको न प्रयोक्ता। कृष्णद्वैपायनार्थे कृष्णशब्दोऽपि देवीभागवते प्रयुक्तः।

(१०) उपवायुः—नागकूर्मादिपञ्चवायूनभिलक्ष्य 'उपवायु' शब्दः ७७।२१-१२ इत्यत्र प्रयुक्तः। शब्दोऽयमन्यत्र न दृष्टो नागकूर्मादिवायुप्रसङ्गे।

**निर्वचनानि**—अथात्र कानिचन निर्वचनानि लघु विचार्यन्ते—

(१) राजा—'राजाभूद्जनरञ्जनात्' (१८।१६;२२०।२४)। अत्रेदं विज्ञेयं यद् राजधातोः कनिन् प्रत्यये सति पदमिदं निष्पन्नं भवतीति उणादिप्रकरणतो ज्ञायते ( १।१५६ )। रञ्जधातो राजशब्दनिष्पत्तिस्तु द्रोणपर्वण्यपि दृश्यते ( ततो राजेति नामास्य अनुरागादजायत ६७।३-', विष्णुपुराणे च ( राजाभूज्जनरञ्जनात्—१।१३।९२ अ०; १।१३।५७-५८)। राजा प्रकृतिरञ्जनादिति कालिदासोऽपि प्रायुङ्क्त (रघु० ४।१२)।

(२) अविमुक्तम्—११२।२ इत्यत्रोच्यते—"गौरि क्षेत्रं न मुक्तं वै अविमुक्तं ततः स्मृतम्" इति। लिङ्गपुराणे पुनः अवितः ( =पापतः ) मुक्तम्=अविमुक्तम् इत्युक्तम् ( १।९२।१४३ )। अविशब्दस्य पापवाचकत्वं श्रुतावुक्तमित्यपि अत्रैवोक्तम्। यद्यपि वेदेऽविमुक्तशब्दोऽप्यस्ति ( शतपथ० ३।४।१।४ ), तथापि न स शब्दः काशीवाचक इति स्पष्टमेव। अविशब्दोऽपि ब्राह्मणग्रन्थे बहुशो दृश्यते, नैषु स्थलेषु पापवाचकत्वमस्य प्रतीयते[1]।

(३) दण्डः—२२६।१६ इत्यत्रोक्तम्—"दमनाद् दण्डनाच्चैव तस्माद्दण्डं विदुर्बुधाः" इति। निरुक्तिरियं शान्तिपर्वण्यपि दृश्यते ( १५।८ )। दण्डशब्दश्च निरुक्तो यास्केन—"दण्डो ददतेर्धारयतिकर्मणः...दमनादित्यौपमन्यवः" ( २।४ ख० )। आह च दशपादी-

---

१. अविमुक्तनिरुक्तिनामधेयः कश्चिद् ग्रन्थो नीलकण्ठेन महाभारतटीका कृता इति श्रूयते। अविमुक्तनिरुक्तिसारनामाऽपरोऽपि ग्रन्थो विद्यते ( H. Dh. S. Vol iv. p. 610 f. n. ).

वृत्तिकारः—"दमु उपशमे दम्यन्तेऽनेनोद्धता जना इति दण्डः दमनं वा दण्डः चतुर्थ उपायः यष्टिर्वा । करणं भावश्च" ( ५।७ ) ।

(४) नारायणः—१७।७-८ इत्यत्रोक्तम्—"आपो नारा इति प्रोक्ता आपो वै नरसूनवः ॥ अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः"। नारायणशब्दस्येयं निरुक्तिः सार्वत्रिकी ( ब्रह्म० ५६।१२ अ०; ६०।२५ अ०; वायु० ५।३८ ) । मनुनापीदमेवाभ्यधायि ( १।१० ) । महाभारतेऽपि दृश्यते—नराणामयनाच्चापि तेन नारायणः स्मृतः" ( उद्योग० ६८।१० ) । आह शंकराचार्यः—"नर आत्मा ततो जातान्याकाशादीनि नाराणि कार्याणि तान्ययं कारणात्मना व्याप्नोति अतश्च तान्ययनमस्येति नारायणः...नराज्जातानि तत्त्वानि नाराणीति ततो विदुः । तान्येव चायनं तस्य तेन नारायणः स्मृतः" ( विष्णुसहस्रनामभाष्य, २४५ नाम ) ।

(५) भगवान्—एतद् विषय उक्तम्—

संभर्तेति तथा भर्ता मकारोऽर्थद्वयान्वितः ।
नेता गमयिता स्रष्टा गकारोऽयं महामुने ॥१०॥

ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना ॥११॥

वसन्ति विष्णौ भूतानि स च धातुस्त्रिधात्मकः ।
एवं हरौ हि भगवान् शब्दोऽन्यत्रोपचारतः ॥१२॥

उत्पत्तिं प्रलयं चैव भूतानामगतिं गतिम् ।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥१३॥

( ३७६।१०-१३ )

इदं निर्वचनं विष्णुपुराणेऽपि ( ६।५।७१-७८ )[१] ।

---

१. ईदृशी व्युत्पत्तिः ( यत्र पदगतवर्णार्थविचारः शब्दसाम्यमाश्रित्य क्रियते ) पूर्वाचार्यसंमता । यथाह माठराचार्यः ( भगवच्छब्दमधिकृत्य )—"अतएव भूतानामुत्पत्तिप्रलयावबोधनात् भ इति । आगतिगतिपरिज्ञानात् ग इति विन्नयोगीति वः । अनति चलतीति अन् । सकलवर्णसंप्रदायाद् भगवानित्यभिमानसिद्धिः । अप्यक्षरवर्णसामान्यान् निब्रूयान् न संस्कारमाद्रियेत इति नैरुक्तश्रुति प्रामाण्यात्" ( २२ कारिकाटीका ) ।

**अग्निपुराणपाठसमीक्षा**[1]—आयुर्वेद - धनुर्वेद- कोश-व्याकरणादि-संबद्धेषु अध्यायेषु ये पाठा भ्रष्टास्ते तत्तच्छास्त्रसंवादेन शुद्धीकरणीयाः।

( १ ) पृथिवीविषयं सर्वं मरुत्वत्यां व्यजायत ( १८।३४ ) इत्यत्र 'सर्वमरुन्धत्यां व्यजायत' इत्येव साधुः पाठः, पुराणान्तरेषु अयमेव पाठो दृश्यते। किञ्च ३२तमे श्लोकेऽपि मरुत्वती-नामास्ति, अतोऽत्र नेदं नाम पुनर्भवितुमर्हति।

( २ ) दत्तकन्यापति-नामप्रस्तावे धर्मादिप्रजापतीनां नामान्युक्तानि, न पुनः कृशाश्वस्य प्रजापतेः ( १८।२९-३० ); यद्यपि धर्मादिप्रजापती-नामपत्यानि यत्र वर्णितानि, तत्र कृशाश्वस्यापत्यान्यपि उक्तानि ( १९।४ )। अतः प्रतीयते १८।२९-३० इत्यत्र कृशाश्वनामघटितः श्लोको लुप्तः।

( ३ ) 'ऋतुरिति पदम् ऋभुरिति स्यात् ( ३८०।४६ ); नारदपुराणे ( १।४९।३४-३५ ) विष्णुपुराणे ( २।१५।३-४ ) च 'ऋभु'-नाम्नो दर्शनादस्मिन्नेव प्रसंगे।

( ४ ) ततस्तान् पुरुषोऽभ्येत्य मानसः ( ३७६।४० )—अत्र 'अभ्येत्यामानवः' इत्येव पाठः साधुरिति विज्ञायते, यतो हि एतन्मतो-पजीव्यभूते छान्दोग्योपनिषद्वाक्ये ( ५।१०।१-२ ) 'अमानवपुरुषः' इत्येव पाठोऽस्ति। तथैव ३७६।३९ इत्यत्र 'तथोत्तरम् शयनं देवलोकं च' इति पठ्यते। अत्र शयनस्थले अयनशब्दः पठनीयः, उत्तरायनशब्दस्य छान्दोग्य श्रुतौ दर्शनात्।

( ५ ) आत्मगन्धा ( ३६८।१९ )—इदम् आत्तगन्धेति स्यात्; प्रलयप्रसंगे पुराणान्तरे तथैव प्रयोगदर्शनात्। आत्तगन्धा=आत्तः अपहृतः गन्धो यस्याः ( विष्णु० ६।४।१४ गता श्रीधरटीका )।

---

१. आनन्दाश्रमीयसंस्करणे ( १८७६ शकाब्दीये ) प्रायेण मुद्रणाशुद्धयो दृश्यन्ते। काश्चनाशुद्धय उदाह्रियन्ते—भूगौ ( २६।१ )=भूमौ; ममोऽस्तु ( ५६।३२ )=नमोऽस्तु; बहस्पते ( ५८।२४ )=बृहस्पते; संभुः ( २१०।१३)= शंभुः; मत्थमः ( ३७३।१० )=मध्यमः; ष्यान ( ३७४।१३)=ध्यान; योमं ( ३७४।७ )=योगम्; गुणै ( ३७१।११ )=गुणै ); द्वाद् ( ३७६।११ )=द्वाङ्; यीज ( ३७३।३२ )=बीज।

६

( ६ ) शास्त्रेतिहासवाक्यानाम् ( ३३७।२ )—इदं शास्त्रेतिहास-काव्यानामिति स्यात्, यतो ह्येतदनन्तरमेव शास्त्रेतिहासकाव्यलक्षणानि प्रोक्तानि ( ३३७।२-३ )।

( ७ ) ययातिपुत्रनामसु 'पुरु' नाम पठ्यते ( २७४।२३ )। सम्यक् पाठस्तु 'पूरु' रिति। अत्र छन्दोरक्षार्थमपि पूरुरिति पाठ आश्रयणीयः। पुराणान्तरे पूरुरित्येव पाठो दृश्यते ( विष्णु० ४।१०।२; आदिपर्व ७५।३५; ८३।१० तथाऽन्यत्र )।

( ८ ) २७३।२० श्लोके 'श्रावन्तः श्रावन्तिका पुरी' च उक्ते। अत्र श्रावस्तः, श्रावस्तिका चेति सम्यक् पाठः; इतिवृत्तशास्त्रतः पुराणान्तरतश्च तथैव प्रतिपादनात्।

( ९ ) १११।१४ इत्यत्र 'तीर्थं वासरकं स्मृतम्' इति पठ्यते। 'तीर्थं वानरकम्' इति क्वचित् पाठः। 'अत्र तीर्थं त्वनरकं स्मृतम्' इति पाठः साधुरिति प्रतिभाति ; महाभारते ( वन० ८३।१६८ ) अन्यत्र च अनरकेति तीर्थनाम्नोदर्शनात्।

( १० ) अष्ट गुह्यनामानि ११२।३-५ इत्यत्र स्मृतानि ; परन्तु गणनायां कृतायां सप्त नामान्येव लभ्यन्ते, अतो गम्यते एकं नाम भ्रष्टमिति।

(१२) सूक्तनामनिर्देशे प्रायेण भ्रष्टपाठा दृश्यन्ते। 'पुरुषं गीति-मेतानि' इति पाठो मुद्रितः ( ९६।४१ )। 'अत्र पुरुषगतिसामानि' इत्येव स्यात्, इदमेव साम्नो नामेति वैदिकेषु प्रसिद्धिः।

(१३) 'वरणा च नदी नासी' इत्युक्तम् ( ११२।६ )। अत्र नासीति पाठो भ्रष्टः। नद्या नाम खलु असि र्वा असी वा भवितुमर्हति, अतो नासीत्यत्र चासीति पठनीयम्। असीति नाम पद्मपुराणे दृश्यते ( ५।१४।१९१ )।

(१४) नाचिकेतसे ( ३८२।१ ) इति पदं खलु 'नचिकेतसे' इति स्यात्, 'नचिकेताः' इत्येव नाम्नः श्रवणात् ( कठ० उप० १।१।१ )।

(१५) 'जम्बु'-द्वीप शब्दः ( उकारघटितः ) १०७।५ इत्यत्र पठितः। द्वीपनाम तु 'जम्बूः' इत्येव, नतु जम्बुरिति। 'जम्ब्वाः फलम्' इत्यर्थे जम्बु-इति पदं दृष्ट्वा द्वीपनाम्नि अपि जम्बुपदं स्वीक्रियते भ्रान्त्या—इत्येव

वयं पश्यामः। जम्बूरिति पदमपि फलमभिधत्ते ( अष्टा० ४।३।१६५–१६६ )। पुराणेषु क्वचित् 'जम्बु' रिति पाठः सम्पादकाज्ञानमूलकः[१], अथवा मुद्रणप्रमादज इत्येव ज्ञातव्यम्।

(१६) १६।१७ इत्यत्र पठ्यते—"दंष्ट्रिनः क्रोधवशगाः" इति। अत्र 'क्रोधवशजाः' इति पाठः साधुरिति प्रतिभाति। कश्यपस्य एका पत्नी क्रोधा, सैव क्रोधवशेति वोच्यते इतिहासपुराणे ( द्रश्यताम् आदिपर्व ६५।१२–१३; ६६।१३; मत्स्य० ६।४३; विष्णु० १।१५।१२६; १।२१।२३ )। इयमेव क्रोधवशसंज्ञकानामसुराणां जननीति आदिपर्वणि ( ६५।३२ )। यदि 'क्रोधवशगा' इत्येव पाठः प्राचीनकोशतः सिध्येत् तर्हि गमधातुर्जननार्थकः, धातूनामनेकार्थत्वादिति मन्तव्यम्।

(१७) २७६।११ इत्यत्र—"षष्ठो ह्याजीवको रणः" इति पठ्यते। रणस्वरूपं खल्वत्रैवोक्तम्—"विश्वामित्रवसिष्ठात्रिकवयश्च रणे सुरान्। अपालयंस्ते निवार्य रागद्वेषादिदानवान्" इति ( २७६।१८ )। पुराणान्तरसंवादात् कोशतश्च 'आडीबकः' इत्येव पाठः साधुः ( द्र० मत्स्य० ४७।४२ )[२]।

(१८) २७६।१२ इत्यत्रोक्तम्—"नवमो वृत्रघातकः। जितो हालाहलश्चाथ घोरः कोलाहलो रणः" इति। अत्र जितेति पदमस्पष्टार्थकम्। 'जित'-नामकं रणमधिकृत्याहाग्निपुराणम्—"शाल्वादीन् दानवान् जित्वा हरिः परशुरामकः। अपालयत् सुरादींश्च दुष्टक्षत्रं निहत्य च"

१. रिचार्डगार्वे नामा विद्वान् सांख्यसूत्रानिरुद्धवृत्तिसम्पादने 'जम्बू-पाठं मूले स्थापयित्वा जम्बू-पाठं टिप्पण्यां प्रादर्शयत् ( ६।५२ वृत्तिः द्र० )। तदिदं चिन्तनमसम्यगिति आस्माकीना दृष्टिः।

२. आडीवक is cxplained in the Markandeya as the fiercest lifelong enmity between वसिष्ठ and विश्वामित्र, who were not satisfied in one life and so were reborn as Black 1bis (Skt. आटि ) and white Ibis ( Skt. श्वेतबक ). वसिष्ठ was आडी and विश्वामित्र was बक ( Markandeya ch. ix; Devibhagavata vi. 18. 30–34 ). [ Matsya Purana–A Study p. 145 ].

( २७६।२२ ) इति। अस्मिन्नध्याये विवृता द्वादश देवासुररणाः । नवमो रणः खलु वृत्रघातक इति निश्चप्रचम् । दशमस्य रणस्य तु किं नामेति स्पष्टं न विज्ञायते अग्निपुराणश्लोके, अतः पुराणान्तरवचनतो निर्णयः करणीयः ।

मत्स्ये पठ्यते—"धात्रश्च दशमश्चैव ततो हालाहलः स्मृतः । प्रथितो द्वादशस्तेषां घोरः कोलाहलस्तथा" इति ( ४७।४३ )। अत्र धात्रः, हालाहलः, कोलाहल इत्येतानि युद्धानि दशम-एकादश-द्वादशस्थानीयानि इति ज्ञेयम्[१] । वाय्वादिष्वपि देवासुरसंग्रामनामानि द्वादश विवृतानि, परन्तु नामनिर्णयस्तु सम्यङ् न भवति ।

( १९ ) ७२।४४ इत्यत्र पठ्यते—"पञ्चशिखाय द्युभवे" इति । अत्र 'ऋभवे' इत्येव पठनीयम् ( ऋभुशब्दस्य चतुर्थ्येकवचनम् )। प्रकरणेऽस्मिन् स्नानाङ्गभूततर्पणं विधीयते । प्रागेतस्मात् सनत्कुमार-कपिलादीनां नामानि गृहीतानि, अत ऋभुर्नाम सांख्याचार्य एवात्र लक्षित इत्येवाभ्युपेयम् । ऋभोः सांख्ययोगवेत्तृत्वं विष्णु-नारदीय-पुराणयोः प्रसिद्धम् । ऋभु-निदाघ-संवादो वराहोपनिषद्यपि वर्तते—"अथ हैनमृभुं भगवन्तं निदाघः पप्रच्छ योगाभ्यासविधिमनुब्रूहीति" ( ५।१ )।

( २० ) सूर्यपूजाविधौ 'खशोल्काय' इति पठ्यते ( ७३।७ )। अत्र 'खखोल्काय' इति पाठः साधुः, काशीखण्डादिषु खखोल्केत्येव सूर्यनाम्नो दर्शनात् ।

( २१ ) १५०।२६ इत्यत्र पठ्यते—"इन्द्रः प्रमतये प्रादात्" इति । अत्र 'इन्द्रप्रमतये प्रादात्' इत्येव पाठः, नतु प्रथमान्तता इन्द्रशब्दस्य युक्ता । पुराणान्तरे 'इन्द्रप्रमितये' इति पदमपि दृश्यते । भागवत-पुराणस्य प्राचीनकोशेऽयमेव पाठो दृश्यते । अत्र इकारघटितः पाठ एव साधुरिति न निर्णयः कर्तुं शक्यतेऽस्माभिरिदानीम् ।

---

१. The meaning of धात्र, हालाहल and कोलाहल is not quite clear. ...धात्र may be an adjectival phrase from धातृ or ब्रह्मा and probably refers to his partisanship for Devas against Asuras ( Matsya Purana–A Study pp. 145-146 ).

( २२ ) २०६।६ इत्यत्र "आतापिर्भक्षितो येन" इति पठ्यते। वातापीति कोशान्तरे पठ्यत इति अग्निपुराणसंपादकेनोक्तम्। एष एव पाठः समीचीनः, इतिहासपुराणे वातापीति नाम्नो दर्शनात्। "हर्षाद् वातापिः" इति ब्रुवन् कौटल्योऽपि वातापिपाठमेव स्वीचकार। स्मर्यते च—"इल्वलो भक्षितो येन वातापिश्च महासुरः" इति।

( २३ ) २७३।५ इत्यत्र पठ्यते—"मनो वैवस्वतस्यासन् पुत्रा वै न च तत्समाः" इति। अत्र न चेत्यत्र 'नव' इति पाठः साधुः, पुराणान्तरे नव-शब्दस्यैव प्रयोगात्, न चेति पाठस्यानर्थकत्वाच्च।

**अग्निपुराण-वह्निपुराणयोरैक्यं भेदश्च**---पुराणप्रसङ्गे (पुराणेषु) यथाऽग्निपुराणम् आग्नेयपुराणमिति वा शब्दः प्रयुक्तस्तथैव वह्निपुराणं वाह्नमित्यादयः केचन शब्दा अपि प्रयुक्ताः। नामोल्लेखे पर्यायशब्दप्रयोगो भ्रमोत्पादको भवति, अतएव 'अक्तपरिमाणा संज्ञा' इत्युच्यते शाब्दिकैः ( प्रदीप २।१।१ )। एवं सत्यपि पुराणनाम्नां पर्यायशब्दा अपि केचन प्रयुक्ताः—गरुडस्थले तार्क्ष्य-नाम, वराहस्थले शूकर-नाम। अनयैव रीत्या 'अग्निपुराण'स्थले वह्निपुराणशब्दः प्रयुक्त इति प्रतिभाति।

शब्दार्थदृष्ट्या यद्यपि न विरोधः, तथापि विषयप्रतिपादनदृष्ट्या वह्निपुराणं खलु अग्निपुराणतः पृथक्—इत्येवाभ्युपेयम्। वह्निपुराणस्य विषयसूची ज्वालाप्रसादमिश्रमहोदयेन प्रकाशिता अष्टादशपुराणदर्पणे। अत्र ये विषया उक्तास्ते लेशतोऽपि प्रचलितेऽग्निपुराणे नोपलभ्यन्ते ( केचन श्लोकाश्च उभयत्र समाना इति विज्ञेयम् )।

इमे हि विषया वह्निपुराणे प्रतिपादिताः —

| अध्यायः | विषयः |
|---|---|
| १ | ऋषिप्रश्नः |
| २ | अग्निस्तवः |
| ३ | ब्रह्मस्तुतिः |
| ४ | स्नानविधिः |
| ५ | आह्निकस्नानविधिः |
| ६ | भोजनविधिः |
| ७ | आग्निकतपः |

अध्यायः विषयः

अध्याय: विषय:

अध्यायः विषयः

| अध्यायः | विषयः |
|---|---|
| १७५ | राम-रावणयुद्धम् |
| १७६ | रावणशिरश्च्छेदनम् |
| १७७ | विभीषणाभिषेकः |
| १७८ | विमानारोहणम् |
| १७९ | अयोध्यापुर्यां रामचन्द्रस्य प्रवेशः |
| १८० | रामाभिषेकः |
| १८१ | राज्यवर्णनं श्रवणफलम्, अनुक्रमणिकावर्णनम् अग्निपुराणपठनफलं च[1]। |

इदं पुराणमग्निमाहात्म्यं प्रकटयति (१-२ अ०), अत इदमेव मूलभूतमग्निपुराणमिति कथयितुं शक्यते। स्कन्दपुराणीयशिवरहस्यखण्ड उक्तं यदग्निमाहात्म्यख्यापनं खलु अग्निपुराणस्य लक्ष्यम्। तदिदं लक्षणं प्रचलितेऽग्निपुराणे नोपलभ्यते (प्रत्युत वह्निपुराणे दृश्यते), अतः शिवरहस्यदृष्ट्या वह्निपुराणमेवाग्निपुराणमिति। एवं सत्यपि वह्निपुराणगता बहवः श्लोका अग्निपुराणे प्राप्यन्त एव (अविकलरूपेण किञ्चित् परिवर्तितरूपेण वा)।

**वह्निपुराणविषये हाजरामहोदयदृष्टयः**—यद्यपि मिश्रमहोदयेनोक्तं यदिदानीं वह्निनामकं पुराणं न मुद्रितम् (अष्टादशपुराणदर्पण पृ० २१५) तथापि अस्माकं धन्यतया अस्य पुराणस्य कोशः प्राप्तः। स च डा० हाजरामहोदयसकाशे विद्यते। एतत्पुराणविषये हाजरामहोदयेन बहु विचारितम्[2]। विचारस्यास्य सार इह प्रदर्श्यते।

(१) प्रचलितमग्निपुराणं तान्त्रिककर्मादिभूयिष्ठम्। इदममौलिकं

---

१. हाजरामहोदयेन वह्निपुराणस्य यादृशः परिचयो दत्तः (विभिन्नेषु निबन्धेषु) सोऽपि उपर्युक्तविवरणानुसारेव।

२. इमे निबन्धा इह द्रष्टव्या हाजरामहोदयकृताः—Discovery of the Genuine Agneya-Purana (J.O.I., M.S. University of Baroda, vol. v. No. 4); Studies in the Genuine Agneya-Purana alias Vahni-Purana (Our Heritage, vol. i-ii).

पुराणं नवमशताब्द्यां विरचितम् । वल्लालसेनविदुषाऽपीदं तिरस्कृतम् । तान्त्रिकधर्मप्राबल्यादेवास्य प्रसिद्धिः प्रचलनं च जातम् ।

(२) प्राक्तनमाग्नेयपुराणं न तान्त्रिककर्मबहुलम्, अतएवेदानीं तस्य प्रचारो लुप्तप्रायो जातः । तच्चेदानीं 'वह्निपुराणे' ति नाम्ना विद्यते ग्रन्थागारेषु । बहुषु निबन्धग्रन्थेषु वह्निपुराणश्लोका उपलभ्यन्ते ( वह्निपुराणत्वेन अग्निपुराणत्वेन वा ) । अग्निपुराणनाम्ना उद्धृता बहवः श्लोका न प्रचलितेऽग्निपुराणे दृश्यन्ते, प्रत्युत वह्निपुराण एवेति ज्ञेयम् ।

(३) इदमेव वह्निपुराणम् 'आग्नेयपुराण'नाम्ना प्राक्तनमाग्नेयपुराणमेव मन्तव्यम् । प्रचलितमग्निपुराणम् ( आनन्दाश्रमादिसंस्करणानि अस्यैव ) अस्मात् पृथक् । केवन च वह्निपुराणगताः श्लोका अग्निपुराणेऽपि दृश्यन्ते । वह्निपुराणगताः श्लोका वक्तृ-श्रोतृ-नाम्नां परिवर्तनं कृत्वाऽपि क्वचिद् अग्निपुराणे संकलिताः ।

(४) अग्निपुराणस्य यानि लक्षणानि मात्स्ये ( ५३।२८-३० ) प्रभासखण्डे (२।४७-४८) च उक्तानि, न तानि सर्वाणि वह्निपुराणे वाऽग्निपुराणे वा सम्यक् चरितार्थानि भवन्ति । अतो गम्यते वह्निपुराणतः प्राचीनमपि मूलभूतमग्निपुराणमासीत् । यद् वा वह्निपुराणमपि पुराणप्रणेतृभिः बहुधा संस्कृतम्, अतएव बहवो विषयास्त्यक्ताः, नवीना विषयाश्च संयोजिताः ।

(५) वह्निपुराणे रामायण-महाभारत-हरिवंश-विष्णुपुराण-विष्णुधर्मतो विषयाः संकलिताः, विष्णुधर्मरामायणादीनां शब्दानुपूर्वी अपि बहुत्र वह्निपुराणे दृश्यते ।

(६) अस्मिन् १२००० श्लोका विद्यन्ते । प्रचलितेऽग्नावपि उक्तं यदस्मिन् पुराणे १२००० श्लोकाः सन्ति । इदमनुमीयते यद् वह्निपुराणस्य द्वादशसहस्रश्लोकपरिमाणं ज्ञात्वा अग्निपुराणकारोऽपि तथैव उक्तवान् ।

(७) वह्निपुराणांशविशेषरूपे नान्दिपुराणे ( यत्र अग्निवसिष्ठसंवादो विद्यते ) इदमुक्तं यद् वह्निपुराणतो यज्ञादिपरकाः श्लोका लुप्ता जाता इति । वह्निपुराणस्य एकः संस्कारो वैष्णवसंप्रदायाचार्यैः कृतः, तैराचार्यैश्च यज्ञादिपरकाः श्लोकाः पुराणतः पृथक्कृताः[1] ।

१. नान्दिपुराणे आग्नेयपुराणविषया इत्थमुपदर्शिताः—

भगवन् देवदेवाग्र विभो धर्मादिकारण ।
त्वत्प्रसादाच्छ्रुताः सर्वे धर्मा वर्णाश्रमोचिताः ॥ १ ॥

(९) इदं वह्निपुराणं वैष्णवाचार्यैः ५०० खीष्टाब्दतः पूर्वमेव संस्कृतमिति विज्ञायते। प्रमाणान्तरैरिदमपि अनुमीयते यदिदं पुराणं चतुर्थशताब्दीतः प्राग् विरचितम्।

(१०) वह्निपुराणस्य त्रयः स्तरा लक्ष्यन्ते। यजुर्वेदीयाग्निहोत्रिब्राह्मणैः पुराणमिदमादौ कृतम्, यत्राग्निरूपो रुद्रः स्तुतो बहुधा। ततश्च भागवतवैष्णवैरिदं संस्कृतम्। अस्मिन् संस्करणे वसिष्ठाम्बरीषसंवादः, अन्ये च वैष्णवसंप्रदायीया विषयाः संयोजिताः। ततश्च तृतीये संस्करणे इतश्चेतश्च कानिचन प्रकरणानि संकलितानि, त्यक्तानि च कानिचन।

[ ४ ]

## ग्रन्थकृतो निवेदना

आग्नेये ये विषयाः प्रोक्तास्तानवलम्ब्येयं त्रिषयानुक्रमणी विरचिता; विषयाणां स्थापनं खलु वर्णानुक्रमत इति विज्ञेयम्। विषयैः सह तद्गता अवान्तरभेदाश्चापि संकलिता अस्माभिः। अतएव यथात्र 'उपाय' इति शब्दः संकलितः, तथैव सामदानादय उपायविशेषवाचकाः शब्दा अपि संकलिताः। यथा वा व्याकरणमितिशब्दः संकलितः, तथैव तद्भेदविशेषाः सन्धि-सुबादयः शब्दाश्च। तीर्थपर्वतनद्यादीनां नामानि चरितानि च ( यान्यधिकृत्य किमप्युक्तं पुराणे ) यथासंभवमिह संकलितानि।

---

कुण्डमण्डपवेदीनां प्रमाणं च यथाश्रुतम्।
दीक्षां यज्ञादिकानां च वास्तुशास्त्रनिरूपणम्॥ २॥
अवतारान् भगवतः चतुर्विंशतिसम्मितम्।
मन्त्रदीक्षाविधिश्चापि संस्कारानष्टसंयुतान्॥ ३॥
चत्वारिंशन्मितान् सूर्यसोमवंशादिवर्णनम्।
एतदन्यच्च भगवन् श्रुतं विस्तरतो मया॥ ४॥
अधुना श्रोतुमिच्छामि ब्रह्माण्डस्य निरूपणम्।
संक्षेपात्कथितं यच्च पुरा ह्येतत् तु विस्तरात्॥ ५॥
श्रोतुमिच्छाम्यहं वह्ने ब्रूहि प्रलयकारणम्।
( १।१-६ )

अथात्रानुक्रमणीरचनापद्धतिविषये किमप्युच्यते[1]—

( क ) विषयोपस्थापने यथासंभवं पुराणगता दृष्टिरप्यस्माभि रुल्लिखिता ( यत्र एतादृश उल्लेख आवश्यकः )। यथा —अक्षरशब्दे 'एकाक्षरार्थनिर्देशः' इत्युक्त्वा 'मन्त्रसंबद्धोऽयं निर्देशो मुख्यतः' इत्यप्युक्तम्। यथा वा 'अजपा-गायत्री'विवरणे 'प्राणायामान्तर्गता' इत्युक्तमस्माभिः।

( ख ) उपात्तशब्दार्थविषये यत्र संशयो भवितुमर्हति तत्र पृथक् स्पष्टो निर्देशः कृतः। यथा 'प्रात्यहिकं राजकर्म' इत्यभिधाय 'इदं राजकृत्यं न पुना राज्यपालनादि कर्म' इति स्पष्टमावेदितम्।

( ग ) एक एव शब्दो यदि विभिन्नार्थकः, तर्हि स एकप्रघट्टके पृथग् विभज्य स्थापितः, यथा लिङ्गशब्दः। शब्दोऽयं शिवलिङ्गवाची शब्द-शास्त्रीयप्रमेयविशेषवाची च, अतो द्विधा विभज्य शब्दोऽयम् अर्थानुसारेण स्थापितः; तथैव रामः ( दशरथपुत्रः ), रामः ( जामदग्न्यः ) च पृथक् स्थापितौ।

( घ ) एकस्मिन्नर्थे यदि द्वौ मुख्यौ पर्यायशब्दौ प्रयुक्तौ, तर्हि उभयोरपि निर्देशो यथासंभवं कृतः। अतएव अग्निपुराणं तस्य नामान्तर-माग्नेयपुराणं चेति शब्दद्वयमिह निर्दिष्टम्। क्वचिच्च पुराणोक्तं विवरणं पर्यायेषु विभज्य स्थापितम्। अतएव ओंकारशब्दे तत्पर्यायवाचिनि प्रणवशब्दे च प्रणवसंबद्धं विवरणं विभज्य उक्तम्।

( ङ ) एकस्मिन् मुख्ये पर्यायशब्दे पर्यायान्तरनिबद्धानि विवरणानि संकलितानि प्रायेण। यथा—अर्चनयजनादीनि सर्वाणि पूजायामेव संकलितानि।

( च ) शिव-विष्णु-ब्रह्मादिदेवानां नामान्तराणि पुराणोक्तानि न संगृहीतानि। प्रसिद्धतमत्वात् शिवः, विष्णुः, ब्रह्मा, इन्द्रः, इत्यादीनि नामान्येव अत्र धृतानि, न हर-भगवत्-प्रजापत्यादीनि। एवं सत्यपि

---

१. अस्मद्व्यवहृतेऽग्निपुराणे ( आनन्दाश्रम १८७६ शकाब्दाः ) बहुत्र श्लोकसंख्याभ्रंशः अध्यायसंख्यामुद्रणाशुद्धयश्च विद्यन्ते। ३०८ तमेऽध्याये १९ तमः श्लोकाङ्को न मुद्रितः। ६४ तमाध्याये ३६ श्लोकः ६६ रूपेण मुद्रितः। अस्माभिस्तु शुद्धा संख्या गृहीता।

सोम-चन्द्र-शब्दयोः गौरी-उमा-शब्दयोश्च संकलनं कृतं पृथक्, इन्द्र-शक्र-शब्दयोश्च। विशिष्टे स्थले पुराणप्रवृत्तिदर्शनात् पर्यायनामान्यत्र संकलितानि। उपक्रमोपसंहारयोः शब्दभेददर्शनादपि पर्यायशब्दाः संकलिताः; यथात्र कामत्रयोदशी-शब्दः संकलितः, तथा अनङ्गत्रयोदशी-शब्दोऽपि संकलितः; पृथक् प्रतिज्ञाकरणादपि पर्यायशब्दाः संकलिताः, यथा—पवित्रारोहणं पवित्रारोपणं चेति पर्यायशब्दद्वयमिह पृथक् संकलितम्। प्रायेण च अपेक्षिताः पर्यायशब्दा यथायथं निर्दिष्टाः।

(छ) संबद्धविषयसूचका निर्देशाः ( cross references ) सर्वत्र प्रदत्ताः। यथा—अध्यातमशब्दविवरणे 'आत्म-ज्ञान-ब्रह्म-शब्दा द्रष्टव्याः' इत्युक्तम्। यथा वा तत्त्व-विवरणप्रसंगे योगस्य ज्ञानस्य च निर्देशो विहितः। एतादृशो निर्देशः खल्ववान्तरस्थलेऽपि प्रदत्तः, यथा ओषधि-शब्दे 'द्रष्टव्य आयुर्वेदोऽपि' इत्युक्तम्।

(ज) यदा कश्चिद् विशिष्टो विषयो विषयान्तरैः सह गौणरूपेण निर्दिष्टो भवति, तदा विषयान्तराणां निर्देशोऽपि प्रदत्तः, न पुनः विषयान्तरगतानि विवरणानि निर्दिष्टानि यथा—ध्यानम् इत्यत्रास्माभि रुक्तम् 'पूजादिषु प्रायेण' इति, अर्थात् पूजाविधिषु अपि ध्यानक्रियाया संबद्ध-देवतालम्बिन्या लघुनिर्देशो विद्यते। अनयैव पद्धत्या न्यासविषयेऽस्माभिरुक्तम्—'सामान्यतः पूजादिषु' इति। आवश्यकस्थले विषयान्तःपातिनां वस्तूनामपि निर्देशः कृतः, यथा 'अद्वैतब्रह्मविज्ञानम्' इत्युक्त्वा 'परमार्थदर्शनं भरतचरितं च' इत्यप्युक्तम्।

(झ) अनुक्रमणीधृत-नामविषय इदं ज्ञातव्यं यत् क्वचित् सविशेषणकं नाम प्रयुक्तम्। अस्माभिस्तु विशेषणं विहाय नामैव धृतम्। यथा—पुराणे 'स्वादूदके'ति शब्दः प्रयुक्तः ( ११९।२४ ), अस्माभिस्तु उदकसमुद्रेति शब्द एव स्थापितः ( स्वादूदकशब्दोऽपि पुराणप्रवृत्तिदर्शनाद् निर्दिष्टः )। नामनिर्देशे यदि भ्रष्टपाठा दृश्यन्ते, तर्हि तेऽपि निर्दिष्टाः ( आवश्यकस्थले ), यथा—कुहुरिति शब्दो मुद्रितः, कुहूरिति अस्माभिरुल्लिखितम्। गरुडमाता विनता खलु विमतारूपेण पुराणे मुद्रिता, मुद्रणाशुद्धिरियमस्माभिः स्पष्टं दर्शिता।

( ञ ) एकं विषयं नाम वाऽधिकृत्य विभिन्नेष्वध्यायेषु विवरणानि प्रोक्तानि। अनेकाध्यायस्थितानामेषां विवरणानां स्थापनमिह सूच्या-

मध्यायक्रमानुसारेण कृतम्। यथा—ऋग्वेदविषये चतुर्षु अध्यायेषु विवरणानि प्रदत्तानि। इमानि विवरणानि अध्यायक्रमत एव स्थापितानि। एकमेव विवरणं यदि अध्यायद्वये स्यात्, तर्हि तावध्यायौ प्रायेण एकत्र निर्दिष्टौ सूच्यामिति विज्ञेयम्। क्वचिच्च 'कृत्स्नोऽध्यायो द्रष्टव्यः' इत्यादिभिर्निर्देशैः विषयस्य व्याप्तिः प्रदर्शिता। अन्तर्गतविषयविवरणप्रसंगेऽपि इयं शैली अभ्युपगता, यथा—बलशब्दविवरणप्रसंगे 'कृत्स्नं युद्धजयार्णवप्रकरणं द्रष्टव्यम्' इत्युक्तम्।

( ट ) यत्र कश्चिद् विषय एकस्मिन्नेवाध्याये विच्छिद्य विच्छिद्य उक्तः, तत्र प्रधानं स्थलं सूच्यां निर्दिष्टम्। स्थलान्तराणि च पृथङ् निर्दिष्टानि, यथा—फल्गुतीर्थप्रसंगे २१५।२५–३३ इत्येवं आकरस्थलनिर्देशं दत्वा 'गयामाहात्म्येऽन्तराऽन्तरास्य महिमा' इत्युक्तम्।

( ठ ) अनुस्वार-विसर्गौ च अव्यवहितपूर्वस्वरानुगतौ इति मत्वा स्वरानन्तरमेव तयोः स्थापनं कृतम्। अनया रीत्या आदौ हसनशब्दः ततश्च हंसशब्द इति विज्ञेयम्।

( ड ) शब्दशास्त्रानुसारेण यत्र अनुस्वारप्रयोगः साधुः, तत्र लाघवात् पञ्चमवर्णं परित्यज्यानुस्वारघटितः प्रयोगः कृतः प्रायशः। पाठकैः सन्देहस्थले पञ्चम-वर्णघटितः शब्दोऽपि द्रष्टव्यः।

उपसंहारे इदमस्माभिर्निवेद्यते यदग्निपुराणस्य केचनाध्याया दुरूहार्थका एव। तन्त्रार्थप्रतिपादनपरेष्वेषु अध्यायेषु ये विषयाः प्रतिपादिताः, तेषां सविशेषं ज्ञानं न मयि विद्यते, अत एतादृशविषयनिर्देशे कचित् स्खलनं संभाव्यते। अनेकशास्त्रसंबद्धानि प्रकरणानि इह सन्ति, सर्वेषां शास्त्राणां सविशेषं ज्ञानमेकस्मिन् मानवेऽतिदुर्लभमतः प्रमादजनिता अशुद्धयोऽपि यदि कचित् स्युस्तर्हि क्षन्तव्योऽहमिति निवेद्यते।

विद्याप्रियाः खलु पुराणविदः सखायो
वैगुण्यपुञ्जमपि सद्गुणतां नयन्ति।
दोषावलीं ह्यपरितापितया महान्ति
ज्योतींषि विष्णुपदभाञ्जि विभूषयन्ति॥

—निवेदकः

**दीपावली** **श्री रामशंकर भट्टाचार्यः**

१५।११।१९६३

५/२६६ अवधगरवी, वाराणसी।

# अग्निपुराण-विषयानुक्रमणी

## मन्त्रः [ विशिष्टदेवीसंबद्धः पुराणक्रमतः ]



## मन्त्रः [ देवदेवीवर्ज-प्रकीर्णक्रियागतः पुराणक्रमतः ]

# प्रथमं परिशिष्टम्

## गणना [ वर्णानुक्रमतः ]

( विशिष्टगणनासु यत्र संख्यापदम् उल्लिखितं तदाकरस्थलमेवात्र निर्दिष्टम्; कृत्स्ना गणना खलु संबद्धेषु श्लोकेषु द्रष्टव्या। ये च गणनायुक्ता विषया अनुक्रमण्यां स्पष्टं संकलितास्ते नात्र संगृह्यन्ते; पदानि त्वेकवचनान्तान्येव स्थापितानि )।

| | |
|---|---|
| —अर्घ्यम् ( अष्टाङ्गम् ) | ३४।२० |
| —आयः ( अष्टधा ) | ६४।६ |
| —आसनम् ( पञ्चधा ) | २४०।२८ |
| —कृतान्तः ( पञ्च ) | २१६।६१ |
| —गुणः ( अष्ट ) | ३२।६ |
| —गुणः [ राजधर्मगतः ] ( षट् ) | २३४।१७ |
| —ग्रहः ( नव ) | १६४।२ |
| —तत्त्वम् ( सप्तधा ) | ८६।३ |
| —तपः ( त्रिधा ) | ३७२।२१ |
| —दीक्षा ( द्विविधा ) | ८१।४ |
| —दीक्षा ( चतुर्विधा ) | ८१।७ |
| —दुर्गा ( नव ) | ५०।१३ |
| —दृष्टिः ( त्रिधा ) | ३४१।१० |
| —देवयोनिः [?] ( अष्टौ ) | २६६।१४ |
| —दैवम् ( पञ्चविधम् ) | २४१।१५ |
| —धर्मः ( दशधा ) | १७५।११ |
| —धातुः ( अष्ट ) | ६५।६० |
| —ध्वजदेवता ( अष्ट ) | ६६।१० |
| —नागः [ =हस्ती ] ( अष्टौ ) | २६१।४ |
| —नागः [ =सर्पः ] ( अष्टौ ) | २६४।२ |
| —पाकयज्ञः ( सप्त ) | ३२।४ |
| —पाद्यम् ( चतुरङ्गम् ) | ३४।१६ |

( नाटकाभिनयादिषु अङ्गकर्मप्रसङ्गे याश्च गणना दर्शितास्ता इह परित्यक्ताः ) ।

## निर्वचनम् [ वर्णानुक्रमतः ]

# द्वितीयं परिशिष्टम्

## संयोजनम्

( श्रव्य-दृश्यकाव्ययोः, व्याकरणकोशादिषु दीक्षापूजादिकर्मसु केचन अवान्तरभेदाः परित्यक्ताः; तान्त्रिककर्मगताः केचन विशेषाश्च )

# शुद्धिपत्रम्

## ( भूमिकायाम् )

| पृष्ठम् | पङ्क्तिः | अशुद्धः | शुद्धः |
|---|---|---|---|
| १३ | १६ | कृतम् | कृतः |
| १६ | २२ | iv? | iv. |
| १७ | २६ | ब्रह्मसूतानां | ब्रह्मप्रसूतानां |
| ३२ | २६ | निलपितम् | निरूपितम् |
| ४८ | २३ | महोदयेनोक्तम् | महोदययोक्तम् |
| ५१ | २० | विद्यानं | विद्यानां |
| ६६ | १० | दृष्टव्यौ | द्रष्टव्यौ |
| ७० | ४ | १२।११ | १।२।११ |
| ७० | ३० | found. | found ( H. Dh. S. vol. iv. p. 64 ) |
| ७७ | २३ | अगत्स्यः | अगस्त्यः |
| ७७ | २८ | बह्वश्व | बह्वश्व |
| ७८ | ६ | उद्दालकिः | औद्दालकिः |
| ७९ | २३ | तस्माददण्डं | तस्माद् दण्डं |
| ७९ | २७ | कृता इति | कृता कृत इति |

## ( विषयानुक्रमण्याम् )

| पृष्ठम् | पङ्क्तिः | अशुद्धः | शुद्धः |
|---|---|---|---|
| ८ | १४ | ४८ | ४९ |
| ३५ | ७ | द्र० यात्रेति संयोजनीयम् | |
| ४६ | १६ | वाक्यमिदं वासुक्यादिनागपूजेत्यादिवाक्यानन्तरं स्यात् | |
| ४७ | २३ | ज्ञानमुपदिष्टमनेनेत्यनन्तरम् 'ऋभवे' इतिस्यादिति पठनीयम् | |
| ६० | २४ | पाण्डुकृतवक | भीमकृतबक |

**पातञ्जल-योगदर्शन**— तत्ववैशारदी—संवलित-व्यास भाष्योपेतम् संपादक—डा० राम शंकर भट्टाचार्य—पातञ्जलयोगसूत्र का सर्वतंत्रस्वतंत्र श्रीवाचस्पति मिश्र विरचित **तत्ववैशारदी** सहित व्यासभाष्य कई वर्षों से अनुपलब्ध था। डा० भट्टाचार्य ने बड़ी कुशलता से इसका सम्पादन कर इसे प्रस्तुत किया है। इस संस्करण की महती विशेषता यह है कि इससे विस्तृत भूमिका में (जो कि चार प्रकरणों में विभक्त है) योगशास्त्र और योग-विद्या का प्राय: पूरा इतिहास वर्णित है। और ग्रन्थ कें अंत में अत्यन्त उपयोगी पातञ्जल-योगसूत्रभाष्यानुक्रमणी दे दी गई है। म० म० पं० गोपीनाथ कविराज जी जैसे दार्शनिक-शिरोमणि ने इस भूमिका को भूरि-भूरि प्रसंशा की है और अपना आशीर्वाद प्रदान किया है। मूल्य १०—००

